# संस्कृतगीतकन्दलिका

प्रणेता

**आचार्यलालमणिपाण्डेयः**

प्राचार्यः

श्रीसर्वार्यआदर्शसंस्कृतमहाविद्यालयः, बहादुरगंजप्रयागः

*ग्रा. अशोकपुर ( पूरे सुखचैन ), पो. चरैया,*

*पट्टी, प्रतापगढ़ ( उ.प्र. )*

**प्रभाश्री विश्वभारती प्रकाशन**

इलाहाबाद ( उ.प्र. )

ISBN : 978-81-92630-74-8

प्रकाशक

**प्रभाश्री विश्वभारती प्रकाशन**

52/डी.-16 वैष्णवी कॉलोनी

11 मोतीलाल नेहरू रोड

इलाहाबाद - 211 002

मो. 09473614545, 08765802304

e-mail : prabhashrivishwbhartiprakashan@gmail.com
prabhashrivishwbhartiprakashan@yahoo.com

www.facebook.com/prabhashrivishwabhartiprakashan

○

**प्रथम संस्करण : २०१५**

○

© आचार्य लालमणिपाण्डेयः

○

मुद्रक :
एकेडमी प्रेस
६०२, दारागंज
इलाहाबाद - २११००६

मूल्य :
तीन सौ पचास रुपये मात्र

**SANSKRIT GEET-KANDALIKA**

*by* Acharya Lalmanipandeyah

**Price : ₹ 350.00**

# समर्पणम्



परमपूज्यप्रातःस्मरणीय स्व० पित्रोः पादपद्मेषु सादरं श्रद्धान्वितं समर्पणम् ययोर्लालनपालनसंरक्षणसम्वर्द्धनसम्प्रेरणद्वारा अहमद्य एतद्योग्यो भवितुं शक्तः इति।

ला॰ म॰ पाण्डेय

आचार्य लालमणि पाण्डेयः

# विषयानुक्रमणिका

❑❑

।। ॐ नम इभाननाय ।।

# आत्मनिवेदनम्

हीरालालं गुरुं नत्वा, मानिकेन विभावितः
संस्कृतस्य प्रचाराय, कुर्वे कन्दलिकां मुदा।।१।।

नैवं कवित्वलाभाय, धृष्टतां विदधाम्यहम्।
केवलं संस्कृतेश्चैव, धारणाय धरातले।।२।।

नैतिकत्वं न नष्टं स्याद्धर्मसंस्थापनं सदा।
जन्मभूमिसमस्यायाः समाधानं भवेदिह।।३।।

संस्कृतस्य प्रभावत्वं, लोके स्यात् प्रसृतं युगे।
उद्देश्यं हृदये धृत्वा, लिख्यते गीतिका मया।।४।।

क्षम्यतां यदि दोषोऽत्र, विद्वद्भिः शास्त्रपारगैः।
बालेऽस्मिंश्च कृपां कृत्वा, समुत्साहेन संयुते।।५।।

प्रचारार्थं विकासार्थं साधनार्थं च संगताः।
शास्त्रपंक्तौ कृतध्यानाः नाट्यादि रसलोलुपाः।।६।।

नैकशास्त्रविचारार्थं जीवने च कृतोद्यमाः।
काव्यामृतरसाधाराः संस्कृतेश्च सुरक्षकाः।।७।।

वेदवेदाङ्गतत्वेषु मानिनश्च विचक्षणाः।
ब्राह्मणत्वस्य रक्षार्थं सर्वदा निरताश्च ये।।८।।

भारतस्य प्रतिष्ठार्थं कृतभूरिपरिश्रमाः।
नैकदेशे समुत्पन्नाः पूज्यपादाः लसद्गुणाः।।९।।

तच्चरित्रावबोधाय वर्णनं क्रियते मया।
संस्कृते गीतसंयुक्ता कन्दली लिख्यते हृदा।।१०।।

ला.म. पाण्डेय

आचार्य लालमणि पाण्डेयः

□□

# सरस्वतीवन्दना

जयति वीणावादिनी सा।
शारदा विज्ञानदा याऽनन्दनिधिरूपा सदा।
कौमुदी रुचिपूर्णहृदया व्याप्य विश्वं शोभिता।
ब्रह्मविष्णुशिवादिसेव्या पातु पुस्तकधारिणी सा।।
जयति...।।१।।

शुभ्रवस्त्राऽलंकृता याऽखिलचराचरवन्दिता।
नर्तकी रसनाङ्गणे सम्पूज्यपादा देवता,
संस्कृता सुरभारतीरूपा सुधासम्पायिनी सा।।
जयति...।।२।।

घंटिकां शूलं हलं धृत्वासने कमलेस्थिता।
बालकानां मादृशानां सर्वकार्यफलप्रदा।।
संस्कृते सञ्चालने साफल्यमंगलदायिनी सा,
जयति...।।३।।

गायने सम्वादने विद्यार्जने सम्भाषणे,
सिद्धिदाऽऽभ्यासे जनानां, भारते जननी मुदा

या जगत्याधाररूपा सर्वकर्मविधायिनी सा।।
जयति...।।४।।

या परा वाणी स्वरूपा मध्यमा या वैखरी
या च पश्यन्तीतिसिद्धा ज्ञायते त्रिगुणात्मिका।
शारदेन्दुमुखी च माताऽशेषधर्मविधायिनी सा।।
जयति...।।५।।

❑❑

# शारदास्तुतिः

भूतलेऽस्मिन् समग्रेऽधुना मुक्तिदा,
शारदा शारदे चोत्सवे राजते।

या सती या भवानी च साध्वी जया,
या त्रिनेत्रा मनोबुद्धिसंशोधिनी
या च दुर्गा तु भव्यांचिता पूज्यते
शाम्भवी भद्रकाली शिवा राजते।।१।।

पाटला दक्षकन्या च रत्नप्रिया,
नैकवर्णा कराली तु कात्यायनी।
चन्द्रघण्टा मतिर्बृद्धमाता च या,
ऽस्यां त्रिलोक्यां तु नारायणी राजते।।२।।

देशरक्षाव्रतं तद्दयापूरितम्,
नैकरक्षोविनाशेन सम्भ्राजितम्।
सुन्दरी शैलपुत्री सुचित्रा चितिर्,
भाविनी चित्ररूपा प्रिया राजते।।३।।

अधीता वाग्देवी सकलविबुधानन्दनकरी
पर विद्या लोकान् रमयति सदा संस्कृतमयी।
अपारे संसारे विधिविजयशम्भ्वादिविनुताम्।
मणिर्लालो मूर्ध्ना प्रणमति सदा चेदृशविधाम्।।४।।

❑❑

# गङ्गामातुः स्तुतिः

गङ्गे तव चरणकृपा, कल्याणमयी जाता,
भयहारिणि भवतारिणि त्वं जह्नुसुता ख्याता।।
गङ्गे...।।१।।

सगरस्य सुताः कपिलेन यदा भस्मीभूताः,
स्वर्गादायाता त्वं मुक्तिं कृतवती तदा।।
गङ्गे...।।२।।

सुरनदी सूर्यतनयाभगिनी त्वं सरस्वती-
युक्ता प्रयागनगरे संगमं मुदा प्राप्ता।।
गङ्गे...।।३।।

तव सुधोपमं सलिलं पीत्वा जनाश्च मुक्ताः,
पापेभ्यः कर्मभ्यः कैवल्ययुता जाताः।।
गङ्गे...।।४।।

देवाऽसुराश्च यक्षाः गन्धर्वकिन्नरा ये,
मानवाः पृथिव्यास्ते सफलाः स्वर्गं प्राप्ताः।।
गङ्गे...।।५।।

भारतं त्वया पूतं संसारे सुप्रथितम्,
संस्कृतिस्त्वया फलिता, कारुण्यमयी माता।।
गङ्गे...।।६।।

त्रैलोक्यं सौख्यमयं विहितं त्वत्पीतजलम्,

दर्शनमज्जनपानेन कृपामपि विख्याता।।

गङ्गे...।।७।।

यद् हरिद्वारकाश्योः श्रूयते यशो विमलम्,

तत्त्वत्प्रभावफलनं त्वं सेड्या संजाता।।

गङ्गे...।।८।।

त्वं प्रदूषिता क्रियसे पापाचारैः सदा,

तत्फलं प्राप्यते नो दुष्टान् प्रति दयालुता।।

गङ्गे...।।९।।

या भीष्मजन्मदात्री त्वं निगमागमगीता,

ऽस्मिन्बाले मातस्त्वं जाता न कृपायुता।।

गङ्गे...।।१०।।

❑❑



# नवग्रहमहिमा

शुभः सूर्यो धाता सकल जगतां नन्दनकरः
शशी शुभ्रः शीतो निविडतमसां नाशविमलः।
सदा भौमो भूमेः शुभदसुसुतो लोहितनिभः,
सुतश्चन्द्रस्यैवं हरितनिज कान्त्यार्जितगुणः।।१।।

गुरुर्देवानां स्यान्निखिलगुणदाता च मतिदः
सदा शुक्रः श्वेतो मदुपरि कृपादाननिपुणः
सुतो दित्याः मानी प्रथितविभुराहुर्ग्रहप्रभः
ग्रहाः केतुश्चैते निखिलसुखदाः स्युर्नरगताः।।२।।

❑❑



# प्रयागमाहात्म्यम्

तीर्थानामखिलानां स्वामी प्रयागराजोऽयं,
सरस्वती च गङ्गा सूर्यात्मजा संगमे...।

गंगायमुने यस्य चामरे छत्रं वटो महद्दिव्यो,
वेणीमाधवनागवासुकी विश्वेशः सोमश्शुभदो।
भरद्वाजमुनियज्ञमणडिताऽलोपशङ्करीयम्।
सरस्वती च गङ्गा सूर्यात्मजा संगमे...।।१।।

वाराणसी पट्टमहिषी सेवतेऽवन्तिका सदा प्रिया,
मथुराऽयोध्या काञ्ची मायावती च द्वारावती श्रिया।
राज्ञीभिः सप्तभिर्मोक्षदाभिः सुशोभतेऽम्।
सरस्वती च गङ्गा सूर्यात्मजा संगमे...।।२।।

अन्तःपरिस्पन्दनिस्स्यन्दं स्रोतः सारस्वतं महत्,
भूसुरभासुररसनाऽग्रे तद्रसान्तरप्रौढं प्रवहत्।
वेदध्वनिपरिपूर्णोविधियागश्च प्रयागोऽयम्।
सरस्वती च गङ्गा सूर्यात्मजा संगमे...।।३।।

कुम्भपर्वप्रवहत्पीयूषधाराजलाऽभिषिक्तोऽयम्।
वेधोविष्णुमहेशादित्यमरुद्गणदेवाश्रितो ह्ययम्।
हनूमतादेवेनयुता मुक्तिदात्रिवेणीयम्।
सरस्वती च गङ्गा सूर्यात्मजा संगमे...।।४।।

किन्नरगंधर्वादिपार्वती लक्ष्मी रम्भा च ब्राह्मणी।
शचीनागकन्यातिलोत्तमादितिर्मेनका कल्याणी।।
उर्वश्यादिमातृभिर्निगमागमैः सुगीतोऽयम्।
सरस्वती च गङ्गा सूर्यात्मजा संगमे...।।५।।

माघमकरसंक्रान्ते सवितरि प्रतिवर्षं विभाति विमलो,
मेलापकस्तु यज्ञतपोभिर्दानसुधापानैरखिलो।
स्वर्गलोकजगतीतलपूजितधर्मराजितोऽयम्।
सरस्वती च गङ्गा सूर्यात्मजा संगमे...।।६।।

❑❑



# वृन्दावनवैशिष्ट्यम्

( कज्जली )

वृन्दावनं सदा स्मरणीयं लास्यं यत्र गोपिकानाम्।
कृष्णं विना व्यर्थता जाता प्रतीक्षमाणगायिकानाम्।।
वृन्दावनम् ...।।१।।

गौरी गोपी भवति कज्जली कार्श्यं वेणुसपत्नीनाम्
कृष्णो मेघः सख्यो विद्युत् कान्तिद्वयं विभातितराम्।।
वृन्दावनम् ...।।२।।

यमुनातटे रासरसललीलालालायिता सखी च सुशीला
मानावृतिर्मानिनीनाम् ।।
वृन्दावनम् ...।।३।।

जलवर्षणं विलोक्य पृथिव्यां कामिनजनानामश्रुवर्षणम्।
आषाढस्य प्रथमदिवस इव चित्तं व्यग्रं रसिकानाम्।।
वृन्दावनम् ...।।४।।

चातकभेकबलाकमधुररवमत्तमयूरकृतध्वनिना ।
जलदानां घनगर्जनतर्जनहृदयविदारणमनुजानाम्।।
वृन्दावनम् ...।।५।।

वर्षा निशा मेघघनतमसाचित्तं च्युतं भावुकानाम्।
प्राणप्रियायाः कृत संस्मरणे धैर्यं गतं कामुकानाम्।।
वृन्दावनम् ...।।६।।

श्रावणदोलायां दोलायितदेहजनितसम्भ्रान्तीनाम्।
कृते दर्शनं जातं दिव्यं प्रभोः कृपा प्रविभातितराम्।।
वृन्दावनम् ...।।७।।

❑❑



# संस्कृतप्रचारोपायाः

संस्कृतस्य प्रचारो भवेत्सर्वदा संस्कृते पाठनं लेखनं स्यात्तदा।
संस्कृते भाषणं संस्कृते गायनं, संस्कृतं मद्दिनं संस्कृतं धारणम्।
संस्कृताः स्युर्जनाः सर्वकामप्रियाः धारयेयुर्मुदास्मारयेयुस्सदा।।
संस्कृतस्य ...।।१।।

व्याकृतं सांख्यकाव्यादिमत्संस्कृतम्, न्यायवेदान्तवेदादिमत्संस्कृतम्।
ज्यौतिषं संस्कृतं भौतिकं संस्कृतम्, पाठनीयं बुधैः पाणिनीयं सदा।।
संस्कृतस्य ...।।२।।

भारतं संस्कृतं भूतलं संस्कृतं, कालिदासस्य शाकुन्तलं संस्कृतम्।
मेघदूतादिकाव्यं कृतं संस्कृतं ज्ञापनीयं हृदाऽध्यापनीयं सदा।।
संस्कृतस्य ...।।३।।

बाणभट्टस्य कादम्बरीपाठनम् माघकाव्यस्य शिक्षासुसञ्चालनम्।
भारवेरर्थसन्धानसन्धारणम् कारणीयं सुसम्मानीयं सदा।।
संस्कृतस्य ...।।४।।

नैषधेपद्यलालित्यसम्पालनम् भाष्यकारेण सम्भाषितं वाङ्मयम्।
पाठनीयञ्च कात्यायनस्य प्रियं चामृतं शिक्षकाः पाययेयुस्सदा।।
संस्कृतस्य ...।।५।।

धर्मशास्त्रं च पीयूषधारायुतं ज्ञानविज्ञानिनां संस्कृतम् यत् प्रियम्।
पाणिनीयस्य लक्ष्यं तु यत्संस्कृतम् ध्यानगम्यं कृतं बालकैः स्यात्तदा।।
संस्कृतस्य ...।।६।।

देववाणीसमाराधने तत्पराः जीविकोपार्जने व्याकुला आतुराः।
संस्कृतं रक्षणीयं भवद्भिस्सदा माननीयं श्रुतं रक्षितं स्यात्तदा।।
संस्कृतस्य ...।।७।।

❑❑



# संस्कृतमातुर्महत्त्वम्

सकलानां भाषाणां माता संस्कृतवाणीयम्।
माता तु वाणी देवी शुभ्रा मनोहारिणी।।

भाषैषा बुधसौख्यविधात्री ज्ञानप्रदा
ऽध्येता यो ह्यस्याः सहृदयो मानमुदा,
तस्य च संस्कृतिपूर्णजनस्य कल्याणकारिणी।।
माता तु वाणी देवी शुभ्रामनोहारिणी।।१।।

साहित्यं वेदान्तन्यायकल्पादियुतं,
सांख्यवेदव्याकृति ज्यौतिषमयलालित्यम्।
आयुर्वेदयुतं यत्रैवं विज्ञानधारिणी.।
माता तु वाणी देवी शुभ्रामनोहारिणी।।२।।

दिव्यशब्दकम्प्यूटरभाषा चेष्टफला।
मन्त्रतन्त्रजपपाठपूजनादिषु सफला।
संसारेऽस्मिन् सर्वेषां हृदि चानन्ददायिनी।।
माता तु वाणी देवी शुभ्रामनोहारिणी।।३।।

धर्मशास्त्रकृतकैवल्येन युता दिव्या,
चतुर्वर्गदात्री च कीर्तिदा ध्यातव्या।
सम्मेलने तु विद्यापीठे पीयूषपायिनी।
माता तु वाणी देवी शुभ्रामनोहारिणी।।४।।

अर्थकृते व्यवहारविदेऽमंगलनाशे चेयं सफला।
सद्यः परनिर्वृतिदाने तु जननी पूज्या दिव्यकला।।
एतादृशी च संस्कृतमाता पुण्योत्पादिनी।
माता तु वाणी देवी शुभ्रामनोहारिणी।।५।।

❑❑



# संस्कृतविज्ञानविशेषे संस्कृतस्य महत्त्वम्

संस्कृतं ज्ञानविज्ञानभाषा यदा, तत्कथं सेव्यते नैव सा सर्वदा
अद्य कम्प्यूटराख्यं च यन्त्रं प्रियं, भूतले मानवानां समेषां हितम्
तस्य भाषा मदीया सुसंवर्धिनी, देववाणी न सेव्या कथं सौख्यदा।।
संस्कृतम्...।।१।।

ग्राम्यभाषाविधाने ततं संस्कृतम् वास्तुशास्त्रं खगोलादिकं ज्यौतिषं
जन्तुविज्ञानप्रौद्योगिकी संस्कृते, सा कथं पठ्यते नैव सर्वार्थदा।।
संस्कृतम्...।।२।।

या धरायाः गतिर्यत्तु चाकर्षणं यद्दृतं सूर्यकान्त्या जलाशोषणम्।
पंचसिद्धान्तगा सूर्यसैद्धान्तिकी, देवभाषा मुदा चिन्तनीया सदा।।
संस्कृतम्...।।३।।

धातुविज्ञानशल्यक्रिया संस्कृता, शस्यकोषात्मिका यत्र पर्यावृत्तिः।
वैदिकं यत्र संख्यानजातं श्रुतम्, संस्कृतेयं च वाणी रसाऽऽकीर्तिदा।।
संस्कृतम्...।।४।।

या परा चाऽणुवादात्मिका वर्तते, सुश्रुतेनैव वर्गीकृता सुश्रुता।
याऽभियन्तृक्रिया संहिता चारिका, सा तु साहित्यसम्पद्युतामुक्तिदा।।
संस्कृतम्...।।५।।

या च माहेश्वरीसूत्रवृत्या युता, न्यायवेदान्तकल्पादिभिः संस्तुता।
सांख्यकाव्यादिभिर्धर्मशास्त्रैः शुभा, सा कथं धारणीया न सद्भिः सदा।।
संस्कृतम्...।।६।।

संस्कृते संस्कृतेः सद्विधानं मतम्, संस्कृते नैतिकत्वं प्रधानीकृतम्।
चेदृशं संस्कृतं ज्ञानकोषात्मकं, तत्कथं मानवैर्नाभिवन्द्यंमुदा।।
संस्कृतम्...।।७।।

❑❑



# माता तु वाणीदेवी

सर्वाषां भाषाणां माता संस्कृतवाणीयं,
माता तु वाणीदेवी शुभ्रामनोहारिणी।।

वाणीयं बुधसौख्यविधात्री ज्ञानप्रदा
ध्येता यो ह्यस्याः सहृदयो मानमुदा,
तस्य सुसंस्कृतिपूर्णजनस्य, कल्याणकारिणी।
माता तु...।।१।।

साहित्यं वेदान्तन्यायकल्पादियुतं,
सांख्यवेदव्याकृतिज्यौतिषमयलालित्यम्।
आयुर्वेदयुतं यत्रैवं विज्ञानधारिणी।।
माता तु...।।२।।

धर्मशास्त्रकृतकैवल्येन युता दिव्या,
चतुर्वर्गदात्री च कीर्तिदा ध्यातव्या।।
एतादृशी तु संस्कृतमाता पुण्योत्पादिनी।।
माता तु...।।३।।

अर्थकृते व्यवहारविदेऽमंगलनाशे चेयं सफला।
सद्यः परनिर्वृतिदाने या जननी सेव्यादिव्यकला
सम्मेलने कवीनां मध्ये एवं सुदामिनी।।
माता तु...।।४।।

दिव्यशब्दकम्प्यूटरभाषा चेष्टफला
तंत्रमंत्रजपपाठपूजनादिषु सफला।।
संसारेऽस्मिन् सर्वेषां हृदि चाऽनन्ददायिनी।।
माता तु...।।५।।

❑❑



# ज्ञानविज्ञानभाषा संस्कृतम्

संस्कृतं ज्ञानविज्ञानभाषा प्रिया तत्कथं सेव्यते नैव सा सर्वदा।।

अद्य कम्प्यूटराख्यं च यन्त्रं यदा,
भूतले मानवानां समेषां हितम्।
तस्य भाषा मदीया च संवर्द्धिनी
देववाणी न सेव्या कथं सौख्यदा।।
संस्कृतम्...।।१।।

ग्राम्यभाषाविधाने ततं संस्कृतम्,
वास्तुशास्त्रं खगोलादिकं ज्यौतिषम्।
जन्तुविज्ञानप्रौद्योगिकी संस्कृते
पञ्चभूतं च सैद्धान्तिकं संस्कृतम्।।
संस्कृतम्...।।२।।

या धरायाः गतिर्यत्तु चाकर्षणम्,
यदृतं सूर्यकान्त्या जलाशोषणम्।
सूर्यसिद्धान्तगा देवभाषा यदा,
पंचसिद्धान्तपूर्णाऽर्चिता चार्थदा।।
संस्कृतम्...।।३।।

धातुविज्ञानशल्यक्रिया संस्कृता,
शस्यकोषात्मिका यत्र पर्यावृत्तिः।
वैदिकं यत्र संस्थानजातं श्रुतम्,
संस्कृतेयं तु वाणी रसैः कीर्तिदा।।
संस्कृतम्...।।४।।

वर्णिता वादजाता यदीयाणवः,
या परा चाऽणुवादात्मिका वर्तते।
याऽभियन्तृक्रिया सुश्रुतेनैव वर्-,
गीकृता या च माहेश्वरीसूत्रगा।।
संस्कृतम्...।।५।।

या तु साहित्यसम्पद्युता मुक्तिदा,
सा कृषिज्ञानशोधान्विता वर्तते।
धर्मसंरक्षिका ज्ञानसंवर्धिनी,
सा च भाषा कथन्नैव संधार्यते।।
संस्कृतम्...।।६।।

संस्कृतं पूजनीयं भवद्भिः सदा,
ऽऽस्मिन् युगे सर्वविज्ञानधारायुते।
येन साफल्ययुक्तं पृथिव्यां जना-
नान्तु शान्तिश्च सौख्यं ततं स्याद्धितम्।।७।।

# संस्कृतस्योपयोगिता

संस्कृतं वाङ्मयं स्वीकृतं भूयसा,
येन साफल्यपूर्णं कृतं जीवितम्।
तस्य लोके सदा विस्तृतं यद्यशो,
जन्म धन्यं तदीयं पृथिव्यां सदा।।१।।

यस्य कर्तव्यमार्गः कृतः संस्कृतः,
यस्य सेवा भवेल्लोकसंजीविनी।
तत्परो यश्च लोकोपकारात्मकस्
तस्य भाग्यं प्रशस्तञ्च कैवल्येदम्।।२।।

येन माता पिता तृप्तिमागच्छतः
देहसुश्रूषया देवरूपश्च सः।
यद्गुरुः पूज्यते श्रद्धया सत्कृतस्
तस्य वाग्देवता हृद्गता राजते।।३।।

संस्कृतं संस्कृतिः संस्कृता सम्मतिः,
भारतस्य प्रतिष्ठाद्वयं वर्तते।
भारतं येन जातं सदा भारतम्,
नाकलोकेनतुल्यं धराशेखरम्।।४।।

यच्छलं धार्यते साम्प्रतं हृद्गतं-
दम्भपाखण्डरोगादिनापूरितम्।
तस्य नाशो भवेत् संस्कृतेनैव भोः,
औषधं संस्कृतं सर्वरोगात्मनाम्।।५।।

निर्दयैर्यद्विनाशो जनानां कलौ,
कल्यतेऽस्मिन् युगे भारतेऽहर्निशम्।
तन्निदानं भवेत् संस्कृतज्ञानगं,
संस्कृतं पाठनीयं जनैः सर्वदा।।६।।

ज्ञानविज्ञानधाराऽप्लुतं संस्कृतं
वेदशास्त्रैः पुराणैर्युतं संस्कृतम्।
व्याकृतं काव्यपीयूषदं संस्कृतम्,
ज्यौतिषं योगतन्त्रात्मकं संस्कृतम्।।७।।

जीवने मानवानां च साफल्यदा,
ब्रह्मसृष्टिर्यया भाषया भ्राजते।
सा च गीर्वाणवाणी यदा धार्यते,
ब्रह्मप्राप्तिस्तदा स्याज्जनानां जनौ।।८।।

संस्कृतस्य प्रचारेण सम्भाव्यते,
सौख्यशान्त्यादिवृद्धिर्यदा भूतले।
तर्हि संवर्द्धनं संस्कृतस्यैव भोः,
वाङ्मनःकायजं स्याद्धि भावात्मकम्।।९।।

## संस्कृतभाषायाः संरक्षणोपायाः

शास्त्राणां पठनं यदा च मननं त्वाध्यापनं मन्थनम्।
बोधः स्याच्च सगौरवो यदि गुरुः ज्ञानप्रदाने पटुः।
छात्राः यान्तु न मूढतां स्वविषये, तेऽध्यायिनः स्युर्यदा,
वैदुष्यं न गतं भवेच्च सुधियः संरक्षितं संस्कृतम्।।१।।

विज्ञानं गणितादिदर्शनयुतं भाषाश्च सर्वाः यदा,
शास्त्रं संस्कृतनिष्ठमस्ति निखिलं शिक्षाश्च दत्ताः शुभाः।
दैवीवाक् पठिता भवेद्यदि जनैरेतादृशी जीवने,
वैदुष्यन्न गतं भवेच्च सुधियः संरक्षितं संस्कृतम्।।२।।

माधुर्येण सुशोभिता च सरला दिव्या मनोहारिणी,
भाषाणां जननी सदाचरणदा या कामधेनुस्सदा।
धर्मैः सद्गतिदायिनी च विबुधैः सा पालिता स्यात्तदा,
वैदुष्यं न गतं भवेच्च सुधियः संरक्ष्यतां संस्कृतम्।।३।।

व्यासः पाणिनिकालिदासविबुधाः बाल्मीकिमाघादयो,
बाणो मम्मटविश्वनाथभरतः कात्यायनो जैमिनिः।

श्रीहर्षश्च पतञ्जलिश्च सफलास्तैः पूजितं सत्कृतम्
वैदुष्यन्न गतं भवेच्च सुधियः संरक्ष्यतां संस्कृतम्।।४।।

भाषा याऽस्ति च कामपूरणहिता वैदेश्चतुर्भिर्युता,
गीताभागवतादि यत्र लिखितं रामायणं भारतम्।
आद्योपान्तमलंकरोति विबुधान् सा माननीया भवेत्
वैदुष्यं न गतं भवेच्च सुधियः संरक्षितं संस्कृतम्।।५।।

□□

# श्री सौदामिनीसंस्कृतमहाविद्यालये संस्कृतकविसम्मेलने समस्यापूर्तिश्लोकाः

बेअन्तसिंहगुलिकादिभिराहता या,
विश्वासघातकृतदारुणकर्मसारैः।
सा चेन्दिरा निपतिता भुवि भारतीया,
चाखुर्गजाननमहो कवलीकरोति।।१।।

विद्यार्थिजीवनगतस्समयो व्यतीतो,
व्यर्थस्सदानकलकार्यकलाप्रवीणान्।
छात्रान् विलोक्य नैराश्ययुतो वदाम,
आखुर्गजाननमहोकवलीकरोति।।२।।

शास्त्राणां नहि दर्शनन्न मननन्नाध्यापनं मन्थनम्
बोधो नैव सगौरवश्च न गुरुर्ज्ञानप्रदाने पटुः।
छात्रा यान्ति च मूर्खतां स्वविषये, ते पाठयिष्यन्ति किम्,
वैदुष्यं क्व गतं विचिन्त्य सुधियः संरक्ष्यतां संस्कृतम्।।३।।

लक्ष्यं रूप्यकयोजनञ्च सकलं सौख्यं सदा मादृशाम्
विद्यादानविधानहीनविकलैरध्यापनं नैव च

अभ्यासेन विना कथन्नुवदनं जायेत भो पण्डिताः,
वैदुष्यं क्व गतं विचार्य सुधियः संरक्ष्यतां संस्कृतम्।।४।।

कस्तूरी तिलकं विभाति विमले भाले करे कंकणम्
वेणुर्भाति तले करस्य सुखदा गोपीसपत्नी सदा।
अंगेनाऽस्ति धृतश्च मालयरसः कृष्णस्य शोभाकरः
आस्ये दन्ततितिर्यथैव गगने सौदामिनी राजते।।५।।

एका चन्द्रमुखी प्रिया रतिनिभा प्रेमाम्बुपूर्णेक्षणा,
बाला याति निशामुखे प्रियतमाद्दूरं तु या मानिनी।
आहूतैव तदाशु दीप्तिसुमुखा पत्या प्रणत्या नवा,
सा क्रोधेन तथैव भाति च यथा सौदामिनी राजते।।६।।

□□

# समस्यापूर्तयः ( सौदामिनी राजते )

## ( स्त्रग्विणीछन्दः )

उत्सवे वार्षिके यत्र सम्मेलनं,
संस्कृतेयं च सौदामिनी राजते।
अत्र विद्यालयीया व्यवस्था कृता,
नैव कुत्राऽपि सा दृश्यते मादृशैः।।१।।

भारतस्य प्रतिष्ठाद्वयी राजते,
संस्कृतिस्सा च सौदामिनी राजते।।२।।

यैर्व्यवस्थापितैवं व्यवस्थापकै,
र्जन्म धन्यं च तेषां पृथिव्यां प्रियम्,
साधुवादान् प्रयच्छामि तेभ्यो मुदा,
भूषिता यैश्च सौदामिनी राजते।।३।।

यत्र सम्मेलने देववाणीयुता,
काव्यधारा शुभा कामिनी राजते।

वा यथा खे प्रिया दामिनी राजते,
तीर्थराजे तु सौदामिनी राजते।।४।।

देववाणीसमाराधने तत्परा
संस्कृतस्य प्रचारे सदोपायगा।
दर्शनीयाऽनुकार्या भवद्भिस्सदा,
पाठशाला च सौदामिनी राजते।।५।।

□□

# काव्यामृतं तन्मधुरं सुपेयम्

शृङ्गारहास्यादिसुपूरितं यत् संजीवनं मानवप्राणिनां च।
धर्मार्थकामादिविधायकं हि, काव्यामृतं तन्मधुरं सुपेयम्।।१।।

साहित्यपाथोनिधिमन्थनोत्थं वेदैः पुराणैश्च समर्थितं यत्।
वाग्देवताबल्लभकाव्यकारैः काव्यामृतं तन्मधुरं सुपेयम्।।२।।

शाकुन्तले माघकवेश्च माघे काव्ये प्रिये नैषधनामके च।
कादम्बरीनामकगद्यकाव्ये काव्यामृतं तन्मधुरं सुपेयम्।।३।।

संस्कारधर्मैः परिपूर्णमेव देशस्य रक्षाकरणं च येन।
विद्याप्रचारप्रसरः कृतो हि काव्यामृतं तन्मधुरं सुपेयम्।।४।।

पापस्य नाशो भुवि धर्मवासश्चित्तस्य तापस्य विनाशनं च।
रात्रिन्दिवं येन विधीयतेऽत्र काव्यामृतं तन्मधुरं सुपेयम्।।५।।

लोकेऽनुभूतं न तु दृश्यमानं स्वर्गे न देवैरनुभूयमानम्।
भूमिः कथायाः रसिकात्मगञ्च काव्यामृतं तन्मधुरं सुपेयम्।।६।।

❑❑

# विश्वभाषा

## समस्यापूर्तिः श्रीसंस्कृतं स्यादिह विश्वभाषा

वाक् संस्कृतं यत्संस्कारयुक्तं
वेदप्रभाभासुरभुसुरा च
शास्त्रे पुराणे च सुपूजितं यत्
श्री संस्कृतं स्यादिह विश्वभाषा।।१।।

**सर्वे गुणाः काञ्चनमाश्रयन्ति** –

लोके धनेनैव सुखस्य प्राप्तिः,
धनं सदा भोगप्रदानशोभि।
धनं विना जीवननाशनं च,
सर्वे गुणाः काञ्चनमाश्रयन्ति।।२।।

❑❑

# विजयते

हिमाद्रेरुत्पन्ना प्रवहति जलैः पूर्णहृदया,
पुनात्येषा लोकान् विहरति सुकूला च सदया।
जगत्येवं ख्याता भवति सुखदात्री हि जननी,
जनैः पूज्या गंगा विलसिततरंगा विजयते।।१।।

❑❑

श्रीगङ्गानाथझाकेन्द्रियविद्यापीठे संस्कृतकविसम्मेलने
कालीदासीया समस्यापूर्तिरितिप्रसङ्गे प्रस्तुताः

## पञ्चश्लोकाः

प्राप्तप्रवासस्समयो वसन्तः दूरे स्थिता चित्तगता च भार्या।
शय्यामुपेतस्य च कामुकस्य, शुक्लेनिशायां व्यथितं हि चेतः।।१।।

गान्धित्रयं पापिभिराहतञ्च, स्वर्गं गतञ्चित्रमिदं विचित्रम्।
शून्यं स्वदेशं परितो विलोक्य, वक्षो विदीर्णं व्यथितं हि नेतः।।२।।

या सुन्दरी सुन्दरकान्तहीना,
यः सुन्दरस्तत्पत्नी कुरूपा।
रम्ये द्वये क्वाऽपि सुतस्य हानि
र्दृष्टा मया विश्वसृजः प्रवृत्तिः।।३।।

काचित्कान्ता प्रियविरहिता चन्द्रकान्ताऽभिधा सा
मध्यक्षामा पृथुकुचतटी सुन्दरी या नताङ्गी।
प्राप्ता कामं नवपरिणया कामपत्नी च साक्षात्
स्वापे रात्रौ भवति शशिनस्सङ्गमेनाऽभिरामा।।४।।

कुञ्जे लतायाः परिहासकामो,
वापीतटे शान्तिमये स चन्द्रश्।
चालिङ्गनान्ते कुचगाठबन्धं
पश्यन्निशायां शिथिलीचकार।।५।।

इति

□□

# देशसमस्या तत्समाधानञ्च

भारतं जन्मभूमिस्तु सर्वाऽधिका विद्यते भारतीयैः सुपूज्या यदा।
तस्य देशस्य या दुर्दशा वर्तते, सा समस्या समाधानयोग्याऽस्ति भोः।।१।।

मातृभूमौ ज्वलन्ती समस्याऽधुना, वर्ततेऽनेकभेदा च दुःखप्रदा।
ज्वाल्यते यत्र देशोऽग्निनेव प्रियः, सा कथं धार्यते नेतृभिस्तैस्तदा।।२।।

यत्र चाराघुटालाहवालाऽभिधं, यत्र बोफोर्सकाण्डं च सञ्जृम्भते।
यो हि द्रव्यप्रियैर्लोलुपैः पूरितस्तस्य देशस्य भक्तिः कथं धार्यते।।३।।

यस्य नेत्रं तु नेतैव चौरोऽस्ति भो रोगहर्त्रा चिकित्सौषधं भुज्यते।
स्वोदरः पूर्यते नैव तृप्तिर्भवेत् धर्महीनैश्च देशोऽधुना पीड्यते।।४।।

मानवानां समूहोऽधिकारी जनो राजकीयोजनः कर्मचारी जनो,
जातिभेदेन भावेन पूर्णोऽस्ति भो मानवो मानवं खादितुं चेष्यते।।५।।

रक्षको भक्षको वर्तते साम्प्रतम्, क्वाऽपि द्रव्यं विना नैव कार्यं भवेत्
नैतिकत्वं विनष्टं प्रभो! साम्प्रतम्, देशरक्षाविधानं भवेद्वा कथम्।।६।।

जीविकोपार्जनं नैव सम्भाव्यते तर्हि विद्यार्जने वा रुचिः स्यात्कथम्।
साऽधिकारैश्च कार्याव्यवस्था यदा कर्मकारैश्च सा पूरणीया कथम्।।७।।

राजनीतिश्च सामाजिकी नैतिकी चार्थिकी धार्मिकी शैक्षिकी भौतिकी।
या समस्या मया दृश्यते भारते, सा समाधानयोग्याऽस्ति युक्त्याऽनया।।८।।

वृत्तरक्षाऽधिकावित्तसंरक्षणात् वित्तहानिर्भवेत् वृत्तनाशस्तु मा।
देशरक्षासदाचारकर्मोद्भवाऽऽचारहीनस्य पापस्य वृद्धिर्भवेत्।।९।।

'मा गृधः कस्यस्विद्'वित्तमित्युच्यते पूर्णभूमिः कुटुम्बस्वरूपा च या।
यत्र गंगाऽस्ति स्रोतश्च सारस्वतम् तस्य देशस्य रक्षाऽस्ति धर्मव्रता।।१०।।

भेदभावं परित्यज्य सौख्यार्थिनो लोभराहित्यसद्भावपूर्णाः सदा।
वेदशास्त्राऽनुकूला भवेयुर्नराः पालयेयुः स्वकर्तव्यमार्गं प्रियाः।।११।।

❑❑

# भारतदेशदशा

भारतं देशराजस्तु सर्वाधिको विद्यते भूतलेऽस्मिने सुपूज्यो विभुः।
तस्य देशस्य या दृश्यते दुर्दशा सा समाधानयोग्या बुधैर्नाबुधैः।।१।।

मातृभूमौ समस्याऽधुना वर्ततेऽनेकभेदा प्रचण्डा च दुःखप्रदा।
ज्वाल्यते यत्र देशोऽग्निनेवप्रियः सः कथं दृश्यते देशरक्षा व्रतैः।।२।।

यो हि चातंकवादैर्विनाशोद्यतैर्यातुधानैस्तथा पीड्यतेऽहर्निशम्।
यत्र काण्डं प्रकाण्डं च संजृम्भते मानवे दानवत्वं सदा वर्धते।।३।।

मानवानां बलिर्दीयते स्वार्थिभिः पूर्वकाले पशूनां यथा चाध्वरे।
यत्र मातापिता वा गुरुर्वाऽतिथिर्नैव सम्मानसेवाः न सम्पूजिताः।।४।।

तर्हि तेषां जनानां स्थितिर्भूतले का भवेदस्यचिन्ताऽधुना वर्तते।
विश्वबन्धुत्वभावः कृशत्वं गतो दृश्यते भूतलेऽधर्मवृद्धिर्यथा।।५।।

दर्शितं धर्मसम्पादनं नाऽस्ति भोः मानवो मानवं खादितुं चेष्टते।
सेवया द्रव्यप्राप्तिः सदाऽभीप्सिता नैव सेवाक्रिया पूर्यते सेवकैः।।६।।

यत्र वित्तार्जनेनैव पूर्तिः कृता विद्यते भारते धर्मरक्षाकुतः।
कार्यचौरैः कथं रक्ष्यते संस्कृतिः संस्कृता'वा'जनाः सम्भवेयुः कथम्।।७।।

यत्र वित्तप्रियाः लोलुपाः पूरितास्तस्यदेशस्य भक्तिः कदा धार्यते।
स्वोदरः पूर्यते नैव तृप्तिर्भवेत् धर्महीनैश्च देशोऽधुनापीड्यते।।८।।

❑❑



# भारतं जन्मभूमिः

भारतं जन्मभूमिस्तु सर्वाऽधिका,
वर्तते भारतीयैस्सुपूज्या यदा,
तस्य देशस्य या दुर्दशा विद्यते,
सा कथं दृश्यते मानवैः सम्मुदा।।१।।

पूतदेशे ज्वलन्ती समस्याऽधुनाऽनेकभेदा च दुःखप्रदा साम्प्रतम्।
ज्वाल्यते यत्र देशोऽग्निनेव प्रियः सा समस्या समाधानयोग्याऽस्ति भोः।।२।।

यो निजाऽर्थे रतैर्लोलुपैः पीडितस्ततस्य देशस्य भक्तिः कथं धार्यते।
धर्मभेदेन भावेन पूर्णोऽस्ति भोः! मानवो मानवं खादितुं चेष्टते।।३।।

रक्षको भक्षको वर्त्तते साम्प्रतम्, नैव द्रव्यं विना क्वाऽपि कार्यं भवेत्।
स्वोदरः पूर्यते नाऽपि पूर्तिर्भवेत् धर्महीनैश्च देशोऽधुनापीड्यते।।४।।

जीविकोपार्जनं नैव सम्भाव्यते तर्हि विद्याऽर्जने वा रुचिः स्यात् कथम्।
साऽधिकारैश्च कार्या व्यवस्था यदा, कर्मकारेण सा पूरणीया कथम्।।५।।

नैतिकत्वं विनष्टं प्रभो सम्मतं, देशरक्षाविधानं भवेद्वा कथम्।
या मया दृश्यते भ्रातरश्चाल्पता, सा समाधीयते शास्त्रयुक्त्याऽनया।।६।।

वृत्तरक्षाऽधिका वित्तसंरक्षणाद्वित्तहानिर्भवेत् वृत्तहानिस्तु मा।
देशरक्षा सदाऽऽचारकार्योद्भवाऽऽचारहीनैश्च पापस्य वृद्धिर्मता।।७।।

मा गृधः कस्यस्विद्वित्तमित्युच्यते पूर्णभूमिः कुटुम्बस्वरूपा तु या।
यत्र गङ्गा च स्त्रोतश्च सारस्वतं, तस्य देशस्य रक्षाऽस्ति धर्मव्रता।।८।।

भेदभावं परित्यज्य सौख्यार्थिभिर्लोभराहित्यपूर्णैर्धरापूरिता।
स्याद्यदा वेदशास्त्राऽनुकूलैर्नरैः, मातृभूमिर्मुदा सेवनीया प्रभो।।९।।

□□

# भारतमातृभूमिसमस्यासमाधानम्

भेदभावं परित्यज्य सौख्यार्थिभिर्लोभराहित्यसद्भावपूर्णैर्मुदा।
वेदशास्त्राऽनुकूला भवेयुर्नराः पालयेयुः स्वकर्त्तव्यमार्गप्रियाः।।१।।

वृत्तरक्षाधिका वित्तसंरक्षणात् वित्तनाशोभवेद्वृत्तहानिश्च मा।
देशरक्षा सदाचारकार्योद्भवाऽऽचारहीनैश्च पापस्य वृद्धिर्भवेत्।।२।।

मा गृधः कस्यस्विद्वित्तमित्युच्यते पूर्णभूमिः कुटुम्बस्वरूपा च या।
यत्र गङ्गाऽपि स्रोतश्च सारस्वतं तस्य देशस्य रक्षाऽस्तिधर्मव्रता।।३।।

भारतं मातृभूमिस्तु सर्वाधिका वर्तते ज्ञानिभिश्चैव पूज्या यदा।
तस्य देशस्य या दुर्दशा वर्तते नेतृभिः सा कथं दृश्यते साम्प्रतम्।।४।।

राजनीतौ च सामाजिकी नैतिकी चार्थिकी धार्मिकी शैक्षिकी भौतिकी।
या समस्या मया दृश्यते भारते सा समाधानपूर्णास्तु युक्त्याऽनया।।५।।

❑❑

# भ्रष्टाचारविधानम्

भ्रष्टाचारविधानं कलौ प्रवृद्धं भारते,
दुःखं हृदये जायते प्रभो!

गलितं चरितं यूनां पूर्णं क्रियतेऽनुचितं कर्मनिन्दितम्।
क्वचन दृश्यते नैव सुधारः क्व च न दृश्यते पापाचारः।।
प्राचुर्येण खलानां वृद्धिर्यदोपजायते। दुःखम् ...।।१।।

हत्याऽऽतंकवादसंवादः, क्वाऽपि श्रूयते जनापवादो-
यत्र तत्र भ्राजते विवादो भुवि जायते नैव चाह्लादो,
द्रव्यं विना कार्यसिद्धिर्न जायते भारते। दुःखम् ...।।२।।

कन्याग्राह्याग्राह्यविचारो, नैव दृश्यतेऽस्मिन् संसारे।
कृत्याकृत्याचारो नष्टो नरः पशूनिव चरत्यपारे,
नैव विवेकप्रयोगविधानं युगं विलोक्यते।। दुःखम् ...।।३।।

नैतिकतायाः पतनं कृत्वा, भौतिकसुखसौविध्यवर्धनम्।
क्रियते युवाभिर्नैव पोषणं, कर्तव्य जीवने पालः।
धिङ् निष्क्रियं जीवनं तुष्टिर्नोपजायते।। दुःखम् ...।।४।।

कोऽपि शृणोति न शास्त्रविधानं, क्रियते वित्तस्यैव निधानम्।
कृत्याकृत्यप्रवृत्तिनिवृत्तिर्नैव दृश्यते यूनां वृत्तिः।
कथं सखे विश्वस्मिन् धर्माचारो भ्राजते।। दुःखम् ...।।५।।

मातापिता च शत्रु समानौ पत्नी पक्षपातविस्तारः।
सुरापानमधुशालापूजा क्रियते नैव गुरूणां सेवा।
पापाचारो भगवन्! सर्वत्रैव विजायते।। दुःखम् ...।।६।।

□□



# श्रावणमासमाहात्म्यम्

(कज्जली)

श्रावणमाससमयसुखदायी
भवति दुःखदायी विना हरिणा।।
जलदो गर्जति वर्षति सततम्
दर्दुरध्वनिपरिपूर्णदिगन्तम्।
चित्तं वनं विना करिणा ...।
श्रावणमास... हरिणा।।१।।
उद्धव प्रेषय मम गोपालम्,
मां संजीवय प्रेष्य सुभालम्।
मनोभवेन भवति ह्यरिणा।
श्रावणमास... हरिणा।।२।।
दधिमुखमंडनकरकृतलेपन-
शोभितमुरलीवादन ना।
श्रावणमास... हरिणा।।३।।
वृन्दावननन्दनयदुनन्दन,
यमुनाकुंजविहारी ना।
तेन विना मम विरहितभवनं,
जातं सौख्यविशून्यं ना।।
श्रावणमास... हरिणा।।४।।

□□

# श्रावणकालः

**( कज्जली )**

श्रावणसमयपयोधरमाला, व्यथयति मनः कामिनीनाम्।
कालिन्दीपुलिनेषु हास्यरससखीजने सुखनर्त्तनमानम्।।१।।

स्मारं स्मारं गोपजनानां चित्तं च्युतं दामिनीनाम्।।
श्रावण ...।।२।।

सौदामिनी नभस्तलमाला, तर्जति हृदयं वियति विशाला।
मदमत्तेभगामिनीनाम्।।
श्रावण ...।।३।।

चातकरहितचातकी विलपति, मोहनदर्शनरहितमनसि सति।
धैर्यं गतं धामिनीनाम्।।
श्रावण ...।।४।।

अभिसारिका सदा निशि गच्छति, प्रियं नायकं हृदि संरक्षति।
प्राणप्रिय त्वं रक्ष जीवनं कथयति कुलं भामिनीनाम्।।
श्रावण ...।।५।।

मत्तमयूरवलाकभेककृतप्रमुदितकलध्वनिव्याप्तदिगन्तम् ।
सौख्यं नैव मानिनीनाम्।।
श्रावण ...।।६।।

श्रावणमासपूर्णिमा वीता नहि प्रभुदर्शननिर्वृतिप्रीता।
विरहे व्यथा भाविनीनाम्।।
श्रावण ...।।७।।

□□

# श्रावणगीतम्

प्रभुमति निशि प्रलपति ब्रजवामा, भवति घनश्यामा हे हरे।
गोपीनन्दन! असुरनिकंदन, लेपितचन्दन कृष्ण हरे।
अरे रमणप्रिय नन्दकुमार केलिविधिकामा हे हरे।।१।।

मोहनश्यामलगात्र विराजित शोभितनूपुर गुंजन हे।
अरे रमतां शुभवृन्दावने सखी अभिरामा हे हरे।।२।।

वंशीवादनकृतजनराधन राधाप्रिय यदुनन्दन हे।
हरे हर तापपुंजमभिराम सत्यप्रभुनामा हे हरे।।३।।

श्रावणमासपूर्णिमा वीता, नहि प्रभु दर्शन निर्वृति प्रीता।
अये रमणीयदिने ललिता न पूर्णपरिणामा हे हरे।।४।।

कालिन्दीपुलिनेषु हास्यरससखीजनैं सुखनर्त्तन हे।
हरे रतिकामरूप तव रासविधौ कृतमाना हे हरे।।५।।

रात्रिदिनेषु ननिद्राऽऽयाता, चक्रवाककामिनीव जाता।
अरे वसुदेवदेवकीलालमणिप्रियध्याना रे हरे।।६।।

□□

# गोपीनां विरहगीतम्

श्रावणमाससमयसुखदायी भवति दुःखदायी विना हरिणा।
जलदो गर्जति वर्षति सततम्,
दर्दुरध्वनिपरिपूर्णदिगन्तम्।
चित्तं वनं विना करिणा...
श्रावण...।।१।।

उद्धव! प्रेषय मम गोपालं,
मां संजीवय प्रेष्य सुभालम्।
मनोभवेन दलति ह्यरिणा।
श्रावण...।।२।।

वंशीध्वनिसारंगप्रमोदः,
गोपीनां हृदि निहितवियोगः।
वृन्दावनविहरणविधिना...।
श्रावण...।।३।।

गोविन्दश्च हरिश्च मुरारिः,
भक्तिजपरनिर्वृतिकंसारिः

जीवनसुखं केन विधिना।

श्रावण...।।४।।

मन्दं मन्दं प्रवहति पवनो,
लताकुंजकृतसुन्दरभवनो,
भ्रमति भ्रमर इव नाथो ना।।

श्रावण...।।५।।

मन्दसुगन्धसुगंधितलतिका,
कृष्णभ्रमररवगुंजितकलिका
पृष्टा मया विना ध्वनिना।।

श्रावण...।।६।।

□□



# अद्य राधिका

## ( कज्ज्लीगीतम् )

अद्य राधिका मुदा मया विलोकिता, सखीजनेन सेविता दिने।
सखी च कृष्णरूपगा विभाति रासनर्तने।
तथा प्रसादिता लतागृहेऽनुधाविता।।
सखीजनेन ....।।१।।

प्रियाः प्रसूनपुञ्जमध्यगं हसन्ति मोहनम्
सखे! श्रिया यथा हरेर्मुखं विलोकितं
स्वभावनिर्मला मुदाऽयने।।
अद्य राधिका ....।।२।।

नन्दनन्दनं शुभं च कामरूपबल्लभं
प्रिया च राधिकाऽनुधाविता च मानिता।। सखी०।
कृष्ण कृष्ण प्राणवल्लभ प्रिया त्वया निवारिता-
मया विचारितं त्वयाप्रिया सुधारिता।
सखीजनेन ....।।३।।

□□

# कज्जलीगीतम्

वर्षानिशामेघघनतमसा चित्तं च्युतं कामुकानाम्।
प्राणप्रियायाः कृतसंस्मरणे धैर्यं गतं भावुकानाम्।।
वर्षा ...।।१।।

चातकभेकबलाकमधुरध्वनिमत्तमयूरनर्त्तनं दृष्ट्वा
जलवर्षणहर्षितदाराणां धैर्यं गतं नायिकानाम्।।
वर्षा ...।।२।।

श्रावणशुक्ले श्वेतं वस्त्रं कृष्णे पक्षे वस्त्रं कृष्णम्।
धृत्वा रात्रौ वर्षणकाले वाञ्छा वृथा सारिकाणाम्।।
वर्षा ...।।३।।

यमुनातटे रासरसलीला कीलायिता सखी च सुशीला।
मानावृतिर्मानिनीनाम् ।।
वर्षा ...।।४।।

श्रावणमासपूर्णिमाऽऽयाता, माधवदर्शनरहिता प्रीता।
विरहव्यथा कामिनीनाम् ।।
वर्षा ...।।५।।

सौदामिनी नभस्तलमाला, व्यथयति चित्तंवियति विशाला।
मदमत्तेभगामिनीनाम् ।।
वर्षा ...।।६।।

लालमणिप्रियगीतकज्जलीदिने दर्शनं जातं दिव्यम्।
प्रभोः कृपा प्रविभातितराम्।।
वर्षा ...।।७।।

□□

# भोजपुरीकज्जलीगीतम्

भ्रष्टाचारविधानं कलौ प्रवृद्धं भारते,
दुःखं हृदये जायते प्रभो।

गलितं चरितं यूनां पूर्णं क्रियतेऽनुचितं कर्मनिन्दितम्।
क्वचन दृश्यते नैव सुधारः क्व च न दृश्यते पापाचारः
प्राचुर्येण खलानां वृद्धिर्यदोपजायते।।
दुःखं हृदये जायते प्रभो।।
भ्रष्टाचारविधानम् ....।।१।।

कन्याग्राह्याग्राह्यविचारो नैव दृश्यतेऽस्मिन् संसारे।
कृत्याकृत्यविचारो नष्टो,
नरः पशूनिव चरत्यपारे।।
नैव विवेकप्रयोगविधानं युगं विलोक्यते-
दुःखं हृदये जायते प्रभो।।
भ्रष्टाचारविधानम् ....।।२।।

कपटपूर्णव्यापारं दृष्ट्वा सुधियो गलितमानसा जाताः
हत्याऽऽतंकवादसंवादः क्वाऽपि श्रूयते जनापवादो-
यत्र तत्र भ्राजते विवादो भुवि जायते नैव चाह्लादो-
द्रव्यं विना कार्यसिद्धि र्न जायते भारते,
दुःखं हृदये जायते प्रभो।
भ्रष्टाचारविधानम् ....।।३।।

नैतिकतायाः पतनं कृत्वा, भौतिकसुखसौविध्यवर्धनम्।
क्रियते युवभिर्नैव पोषणं कर्तव्यस्य जीवनेपालः
धिङ्निष्क्रियं जीवनं तुष्टिर्नोपजायते-
दुःखं हृदये जायते प्रभो।
भ्रष्टाचारविधानम् ....।।४।।

❑❑

# सुजनजनचिन्ता

अस्मिन् युगे सखे युवकानां मनसि मलिनता दृष्टा,
सुजनानां हृदि चिन्ता दृष्टा नु।

पुत्रः पितृभक्तिकृतवैरो, मातुर्नैव शृणोति सुवचनम्
शिष्यो गुरुसेवायाः विमुखो भवत्यनम्रो भणति कुवचनम्
प्रभुसम्मितोपदेशकृतेऽस्मिन्युगे कुटिलता दृष्टा,
सुजनानां हृदि चिन्ता दृष्टा नु।।१।।

श्वश्रूर्वधूजनानां हृदये किंचित्स्थानं विना विशोभा,
वृद्धावस्थायां सा माता पुत्रवधूभिर्नैव सुसेव्या।
भवति प्रभो! कान्ताप्राधान्ये पुरुषविफलता दृष्टा
सुजनानां हृदि चिन्ता दृष्टा नु।।२।।

ज्येष्ठकनिष्ठविचारो नष्टो भ्राता भ्रातुर्भवति विकष्टो
वित्तविभाजन समयकुबुद्धिर्हृदयं दलति गृहस्थसमृद्धिः।
अर्थप्रधाने काले परिवारस्य विचलता दृष्टा।
सुजनानां हृदि चिन्ता दृष्टा नु।।३।।

विपत्सहायसुहृत्समवायो, जातः शत्रुसमश्च निहन्ता
द्रव्यं प्राप्य विरोधिजनेभ्यो, हन्ति प्रियं मित्रं धनहर्त्ता।
भगवन्! सर्वत्रैव छलं दृष्टं न विमलता दृष्टा।
सुजनानां हृदि चिन्ता दृष्टा नु।।४।।

न प्रकरोति कोऽपि सत्कारमतिथिजनानां गृहपरिवारे।
अतिथिदेवता रात्रौ वित्तं हृत्वा भ्रमति पूर्ण संसारे।।
भियाऽनया भ्रातर्निशि भक्तानां तु विफलता दृष्टा।
सुजनानां हृदि चिन्ता दृष्टा नु।।५।।

त्वमेवमाता पिता त्वमेव, त्वमेव बन्धुः सखा त्वमेव।
त्वमेव सौख्यसाधनं देव! त्वमेव धर्मपालनं देव!
इति भावना धनं प्रति जाता नैव कुशलता दृष्टा।
सुजनानां हृदि चिन्ता दृष्टा नु।।६।।

❑❑



# 'शुभगीतम्'

धन्यो महात्मा गान्धी जवाहरलालः सुसेवितबालोनुभोः
येन देशोऽयं जातः स्वतन्त्रः समाजे सुसेव्यो नु भोः।।१।।

धन्यः सुभाषचन्द्रबोसो विजयकृतघोषो नु भोः।
भगतसिंहदत्तपूतशरीरो जगति कर्मवीरो नु भोः।।२।।

आजादशब्दविशिष्टो जयति शुभ चन्द्रो नु भोः।
येन प्राप्तोऽयं भारतदेशः सुस्वीकृतक्लेशो नु भोः।।३।।

जगति जयति शुभवेला समयकृतखेला नु भोः
भारतमाता शुभा सुखदात्री सुपूज्या विधात्री नु भोः।।४।।

हे हे जना भारतीयाः स्वकर्त्तव्यनिष्ठा अहिंसासत्यशिष्टा नु भोः-
देशरक्षाव्रताः सन्तु भक्ताः भवन्तु धर्मपाला नु भोः।।५।।

□□

# काशीनरेशस्य पौत्रोत्पत्तिकाले शुभगीतम्

काशीनरेशकुटुम्बप्रदीपकरूपः प्रदीपक भूपो नु भोः
यस्य जातोऽयं राजकुमार उदारः मान्यो नु भोः।।१।।

जगति शुभः शुभशकुनविधायककालो विधायकबालो नु भोः
यत्रकृष्णप्रियायाः कुलेऽस्मिन् विभूषणरूपो विभूषणरूपोऽस्ति भोः
यः अशोककुमारः पितामहरूपः विलसति भोः।।२।।

माता यदीयां च विद्योतमा मुदमेति च सिद्धिं विन्दति भोः।
विश्वनाथश्चवन्द्योऽभिनन्द्योऽयं बालोऽभिनन्द्योऽयं बालो नु भोः।।३।।

बालोऽयं गुणगणपूतो भवतु भुविभूपो भवतु भुवि भूपो नु भोः।
अद्य जगति प्रतिष्ठितकीर्तिर्युगे सुररूपो नु भोः।
काशीनरेशः ....।।४।।

❑❑

# सादरं वच्म्यहं स्वागतम्

भावपुञ्जेन युक्तं मुदा, सादरं वच्म्यहं स्वागतम्।।
भोः सादरम्...

संगमे संगमः संगतः, दिव्यसर्वार्यविद्यालये।
संस्कृतस्याऽपि रक्षा कृता, संस्कृतिश्चैव संरक्षिता।।
ज्ञानिनां स्वाऽभिमानैर्युतानाम् सादरम्०...।।१।।

पुष्पमाल्यं जलं नाऽस्ति भोः! चन्दनं वा फलं नाऽस्ति भोः!
येन नाऽहं समर्थोऽर्चनेऽस्यां सभायां त्वदीये शुभे।।
पूज्यवाग्देवतावल्लभोऽहं, सादरं वच्म्यहं स्वागतम् भोः।।
सादरम्०...।।२।।

देववाणी समाराधने तत्परो यज्ञदत्तः सदा।
यस्त्रिपाठीसुरेशप्रभुः, योऽस्ति विद्याप्रचारप्रियः।।
ज्ञानविज्ञानधारान्वितानाम्, सादरम् वच्म्यहं स्वागतम्।
भावपुञ्जेन०...।।३।।

उत्तरेऽस्मिन् प्रदेशे शुभे, संविधानाऽनुगाः सन्ति ये।
संस्कृतेऽस्मिन् समाजे सदाऽऽध्यापकानां हिते संरताः।।
सर्वकारेण सम्मानितानाम्, सादरम् ..
सादरम्०...।।४।।

भावपुञ्जेन युक्तं मुदा, सादरं वच्म्यहं स्वागतम्।।
भोः सादरम्...।।

□□



**अखिलभारतीयसंस्कृतसम्मेलने**
**श्री सौदामिनीसंस्कृतमहाविद्यालये प्रयागे**
**सूर्यषष्ठीकार्यक्रमे प्रस्तुतं**

# विद्वत्स्वागतवचनम्

सूर्यषष्ठी समारोहसम्मेलने स्वागतं श्रीमतां कोटिशः स्वागतम्।

अत्र सौदामिनीपाठशालास्पदे संस्थितानां समेषां च विद्यावताम्।
श्रद्धया कीर्तिभाजां गुणैर्भ्राजितानां हृदा देववाणीयुतं स्वागतम्।।१।।

यैर्व्यवस्थापितोऽयं हि संशोभते संस्कृतोऽयं च विद्यालयः सर्वदा।
तीर्थराजे प्रयागे शुभे संगमे, पूज्यविद्वज्जनानां कृते स्वागतम्।।२।।

पुष्पमाल्यं जलं नैव गन्धादिकं, नैव मिष्टान्नभोज्यं फलं नास्ति भोः।
येन नाहं समर्थोऽर्चने श्रीमतां केवलं शब्दपुष्पैः कृतं स्वागतम्।।३।।

यो महेशश्च रामो नरेशः श्रियाऽन्यैर्विशिष्टैश्च शुक्लैर्युतो भ्राजते।
चात्र सम्मेलने ज्योतिषा राजतेऽस्यां सभायां तदीयं मुदा स्वागतम्।।४।।

सूर्यषष्ठी समारोहसम्मेलने स्वागतं श्रीमतां कोटिशः स्वागतम्।

□□

# वासुदेवोऽस्ति नन्दप्रियः

भावपुञ्जेन युक्तं हृदा, सादरं वच्म्यहं स्वागतम्।
भोः, सादरं वच्म्यहं स्वागतम्।।

तीर्थराजे सभासंगता दिव्य सर्वार्यविद्यालये
संस्कृतस्यापि रक्षा कृता संस्कृतिश्चैव संरक्षिता
सर्वविद्वद्जनानां नतोऽहं, सादरं वच्म्यहं स्वागतम्।।१।।

शक्तिबुद्ध्यादिशास्त्रादिभिः नास्ति काचित् गतिर्मे विभो,
येन नाऽहं समर्थोऽर्चने स्यां सभायां त्वदीये शुभे।
पूज्यवाग्देवतावल्लभोऽहं सादरं वच्म्यहं स्वागतम्।।२।।

वासुदेवोऽस्ति नन्दप्रियः .. शंकराचार्यनामा गुरुः,
येन देशे विदेशे सदा डिण्डिमो .. धर्मशेषः कृतः
तस्य पूज्यस्य चास्मिन् दिने .. सादरं वच्म्यहं स्वागतम्।।३।।

देववाणी दिनं मच्छुभं चेत् सदा भावना स्यात् सदा।
पूजनं शुद्धबुद्ध्या युतं मर्त्यलोकेऽपि नाको भवेत्।
ज्ञानिनां स्वामिभावैर्युतानां .. सादरं वच्म्यहं स्वागतम्।।४।।

□□

# वन्दनासत्यप्रकाशयोः परिणये मंगलकाव्यकुसुमानि वितीर्यन्ते

सत्यप्रकाशयुक्ता हि वन्दना कन्यका शुभा,
पाणिग्रहणबेलायां भूयात् सौभाग्यशालिनीं।।१।।

मिश्रो मिश्रकुलावतंसशुभगो गंगाप्रसादश्च यः,
ओंकारेण युतश्च कीर्तिविमलः सम्माननीयो मुदा।
ओंकारस्य सुतश्च बुद्धिसफलः ख्यातः मनःकामना,
सौभाग्येन सुपूरितश्च विनयो मांगल्यपूर्णो भवेत्।।२।।

खीरीक्षेत्रसमीपगो बसगढ़ी ग्रामश्च पूतः सदा,
मिश्राणां शुभकांक्षिणां गृहनुनो लोके सुसम्मानितः।
ख्याते तीर्थगुरौ प्रकृष्टविहिते यागे प्रयागे प्रभौ,
विश्वेशस्य कृपाप्रभावविभवो मांगल्यकारी भवेत्।।३।।

यथा देवो विष्णुभवति रमया शोभितविभुः,
यथा रामो दिव्यो जनकतनयायाः शुभगुणैः।
महादेवो मान्यो भवति नगजाशोभितवपुः,
प्रकाशः सत्यश्च प्रभवतु हि कन्याशुभगुणैः।।४।।

उत्सवे मंगले यत्र सम्मेलनं,
सत्ययुक्ता शुभा वन्दना राजते।
तीर्थराजे प्रयागे च कोरांवगं,
सागरस्यैव शुभ्रंपुरं शोभते।
केशरीपुत्रबाँकेत्रिपाठी च यः,
पुत्रविश्रामनाम्ना युतो भ्राजते।। उत्सवे...।।५।।

अत्र सत्यप्रकाशेन पूर्णा जनाः,
अंकिता वन्दना पक्षगा शोभिताः।
धन्य ओंकार मिश्रस्त्रिपाठीं च यः,
यस्य पौत्रस्य पौत्र्याश्च भा राजते।। उत्सवे...।।६।।

विष्णुना श्रीर्यथा राधिका कृष्णगा,
शंकरेणैव पूज्या शिवा राजते।
वा निशा चन्दरकन्त्या यथा राजते,
सत्ययुक्ता सदा वन्दना राजते।। उत्सवे...।।७।।

नैषधेनैव राज्ञी च् भैमी प्रिया,
शोभिताऽशेषभूम्यां गुणैः राजते।
मेनकायाश्च जाताऽपि दुष्यन्त्गा,
सा तु सत्यप्रकाशेन सं राजते।। उत्सवे...।।८।।

❑❑

# सुहृद्वरस्य डॉ. राधाकृष्णत्रिपाठिनः पुत्रस्य चिंरजीविशरदो विवाहोत्सवे पठितानि मंगलपद्यानि

**शरदश्च कृपायुक्ता कन्यका ज्योतिसंज्ञका।**
**पाणिग्रहणवेलायां भूयात् सौभाग्यशालिनी।।१।।**

खागाक्षेत्रयुते फतेहपुरगे ग्रामे शुभे सौख्यदे,
सेमौरीतिप्रसिद्धिदीधितियुते गोत्रे प्रिये कश्यपे।
श्रीश्रीकान्तसुसंज्ञया सुफलितो मान्यस्त्रिपाठी च यः,
पुत्रैः कृष्णप्रियैश्च भाग्यसहितैः संशोभते सम्मुदा।।२।।

पुत्रस्तस्य कनिष्ठनिष्ठितपदो गीर्वाणवाणीप्रियो
राधाकृष्णइतिप्रसिद्धिविमलश्चाचार्यवर्यो हि यः।
गाम्भीर्येण समुद्रसोदर इव स्वीये कुले नीरजो,
बाल्यादेव मम प्रियः सहचरो मांगल्यपूर्णो भवेत्।।३।।

ख्याते रामकृपालुसंस्कृतमहाविद्यालये भ्राजिते,
प्राचार्येतिपदेन येन विदुषा शास्त्रं च विस्तीर्यते।

विद्यादानविधानशोभितविभुः कीर्त्या च सम्पूर्यते,
मैत्री येन विभाविता भुवि सदा शान्तिं सुखं प्राप्नुयात्।।४।।
राधाकृष्णसुपुत्रचन्द्रविमलज्योतिर्युतस्सर्वथा,
चन्द्रो ज्योतिसुतो यथा शरदि खे सम्मोदते शोभितः।
पत्नीं ज्योतिनिभामवाप्य स्वकुले भूयान्मुदा संयुतः,
सौभाग्येन सदाऽखिले जगति यश्चोच्चं पदं ह्याप्नुयात्।।५।।

प्राचार्य्यस्य हृदिस्थिता च जननी पूज्या सुशीला सदा,
स्वर्गं प्राप्य तु देवताततिगताऽऽशीर्वाददात्री भवेत्।
पुत्रोद्वाहसुमंगले ह्यनुदिनं कीर्तिप्रिया चारुणा,
लाले गंजप्रियप्रदे तु भवने बध्वा भवेत् सौख्यगा।।६।।

शुक्लः शुक्लकुलावतंसशुभगः कन्यापिता मानितः,
राजेशश्च गणेशपुत्रविनुतो ज्योत्या च पुत्र्यान्वितः।
पत्नी यस्य गुणैर्युता च सुषमा संशोभते तत्कुले,
कन्यादानविधानसौख्यममलं सम्प्राप्नुतो मण्डपे।।७।।

यथा चन्द्रं लब्ध्वा विहसति चकोरी निशि सदा,
यथा चन्द्रेणैवं विकसित च शान्ता कुमुदिनी।
यथा चान्द्र्या कान्त्या भवति ससुखा भाग्यसहिता,
तथैवैषा ज्योतिः शरदसहिता स्याच्च ससुखा।।८।।

❑❑

# धर्मोचितकर्मश्रीराकेशोपाध्यायवंश-माहात्म्यम्

श्रीरामभक्तरघुनन्दनपूज्यपादो, देवीयुतो भगवतीपतिरित्युपास्यः।
राकेशवंशसम्पूजितपूर्वजो हि, कुर्याच्छुभं सकलवंशजसंकुलस्य।।१।।

ख्यातं जौनपुरं प्रसिद्धनगरं चाद्दोपुरं शोभते,
ग्रामस्तत्र च पत्रगेहसहितः ऊँचेतिसिद्धिं गतः।
क्षेत्रं यस्य सुजानगंजविमलं, लब्धा जनिर्यत्र च
राकेशस्तु पवित्रधीश्च विनतः ख्यातस्तदीये कुले।।२।।

भार्या यस्य शचीतिनामसहिता साक्षात् शचीरूपगा,
मुंबय्यां त्वधिकारयुक्तप्रबलं शिक्षाविभागे पदम्।
प्राप्ता साऽनुदिनं यशो वितनुतेविद्याप्रचारेण च,
हीदृक्षस्तु विलक्षणो जनहितो राकेशरूपो भवेत्।।३।।

उपाध्याये वंशे प्रथितशिवमूर्तिर्गुणगणः,
विधाता संस्थानां कुलकमलगन्धेन सहितः।
सुपुत्रो वाग्देव्याः विगतकलुषश्चिन्तनपरः,
प्रपौत्रौ राकेशोऽप्रतिहतगतिर्यत्कुलप्रभः।।४।।

रामप्रसादश्च सुभाषचन्द्रो, राकेशसम्पूजितपादपद्मौ।
सुखैश्च विद्याभिरभीष्टसिद्धी राकेशकल्याणप्रदौ भवेताम् ।।५।।

राकेशपुत्रश्च शुभोऽभिषेको द्वितीयपुत्रो ह्यनुरागपूर्णः।
द्वावेव सेवासु पदं च प्राप्तौ बी.टेकशक्त्यार्जितसम्पदा च।।६।।

एतत्पूर्वजसंकुलेन सहितः पुत्रादिभिः सेवितो,
विख्यातश्च प्रकाशितो हि गगने राकापतिश्चन्द्रमाः।
राकेशो बुधमण्डलीषु गणितः सम्मानवित्तश्च यः,
कर्त्तव्येषु च निष्ठितश्च विनतः साफल्यगामी भवेत्।।७।।

क्षेत्रे स्वस्य सदा युगे च विभुतां प्राप्तो भवेत् सर्वदा
भार्या तस्य शचीप्रियाऽभ्युदयगा सिद्धा च देवी भवेत्।
सम्पूर्णाश्च कुटुम्बिनः सहृदयाः शान्तिं सुखं चाप्नुयुः,
लोकेऽस्मिन् प्रभुतायुताश्च सकला आशीर्मया दीयते।।८।।

स्वकीये वंशेऽस्मिन् शशिनमिव राकेशमतिमान्,
समग्रे देशे यः प्रथितयशसा धर्मनिरतः।
शचीदेवीयुक्तो धवलमनसापूरिततवपुः
प्रभुत्वं चैश्वर्यं प्रघटयतु लोके मणिरिव।।९।।

❑❑

## श्रीसम्पूर्णानन्द सं.वि.वि. वाराणसीभू.पू. व्याकरणविभागाध्यक्षाणां परमपूज्यपादानां प्रो. रामप्रसादत्रिपाठिनां

# स्तुतिगीतम्

ख्यातं जौनपुरं प्रदेशसुकुलं सम्मानितं शोभते,
ग्रामस्तत्र पवित्रधीश्च विनुतो वेल्छेतिनाम्ना युतः।
पार्श्वे तत्र च पत्रगेहसहितो ग्रामो मसीराऽभिधः,
जातो रामप्रसादसंज्ञकसुधीर्वाग्देवताकुक्षितः।।१।।

पत्नी यस्य सुलक्षणा च छविराजीतिप्रिया जाह्नवी,
तज्ज्येष्ठश्च सुतो विलक्षणमतिः रामेश्वरो भ्राजते।
भार्या तस्य च सीतयेव सुगुणा जाता सुभद्रा कुले,
राजेन्द्रस्तु कनिष्ठपुत्रपदवीमूषां प्रियामाश्रितः।।२।।

तन्मध्यमसुतकंजरूप कुमुदस्तारापतिश्चन्द्रमाः
लोकः ख्यातजयप्रकाशविदुषा ज्ञानप्रकाशान्वितः।
आशीषश्च मनीषरश्मिसहितः पुत्रो यदीयात्मजः,
संगीतेतिसुता हि रश्मिविभवा संगीतरूपेव सा।।३।।

पौत्रौ प्रेयसचेतसौ स्तुतियुतौ भातो विनीतात्मजौ,
वागीशेति सुसंज्ञया सुफलिता पौत्री यदीया मता।
चैतत्संततिसंयुतश्च विदुषां पूज्यस्त्रिपाठी सदा,
स्वर्गे रामप्रसादपण्डितगुरुः शान्तिं सुखं चाऽऽप्नुयात्॥४॥

संस्कृते विश्वविद्यालये पूजितः पाणिनीये च शास्त्रे तु यः पाणिनिः।
यश्च वेदान्तविद्यात्मकोऽस्मिन् युगेऽशेषदेशे च विद्यापताकायितः॥५॥

यो गुरूणां गुरुः शान्तिमूर्तिर्मुदा यो मुनीनां त्रयाणां स्वरूपानुगः।
यश्च साक्षात्सुराणां प्रभावैर्युतो लोकवन्द्यस्त्रिपाठी मया पूज्यते॥६॥

यस्य वाणी सुधाऽऽस्वादनैः संयुतापीयतेऽद्यापि शिष्यैः प्रयुक्ता युगे।
संस्कृतस्य प्रचारे रतो जीवने सोऽभिनन्द्योऽभिवन्द्यस्सदा भूतले॥७॥

यश्च रामप्रसादास्त्रिपाठीगुरुर्यः गरिम्णा युतोऽद्यापि संजीवितः।
संस्कृतज्ञानसारात्मकं जीवनं संस्कृतः संस्कृतिः सद्गुरुः पूज्यते॥८॥

संस्कृतं लोकभाषेति संघोषणेनैव विद्याप्रचारः कृतो भारते।
भारतं येन धन्यं च वाग्देवतापुत्ररूपेण लोके प्रसिद्धिं गतः॥९॥

नाकलोकेऽपि विद्यागुरुः पूज्यते यश्च वाचस्पतिर्देववन्द्य सदा।
चाऽत्र लोके हृदा पूज्यते सर्वदा शब्दपुष्पाञ्जलिर्दीयते तत्कृते॥१०॥

यो हि रामप्रसादस्त्रिपाठी गुरुर्लेखितुं तस्य कीर्तिर्नशक्या मया।
यो वसिष्ठश्च साक्षात् सुरैर्वन्दितः श्रद्धया मन्दबुध्याञ्जलिर्दीयते॥११॥

रामयत्नश्च शुक्लो हि देवस्वरूपश्च मिश्रस्तु शास्त्रार्थपारंगतौ।
यो हि रामस्त्रिपाठी च दामोदरो रामचन्द्रो द्विवेदी धनीन्द्रश्च झा।।१२।।

भारतोयस्त्रिपाठी च रामः किशोरश्च शुक्लस्त्रिपाठी ह्युमाशंकरः।
यः कुमास्त्रिपाठी च लालित्यगो यः प्रसादश्च गायत्रिसंज्ञायुतः।।१३।।

यो नरेन्द्रश्च पाण्डेयनाम्ना सदा विश्वविद्यालये संस्कृते मानितः।
यः पतिर्विश्वविद्यालयीये कुले शिष्यरूपेण रामप्रसादस्य सः।।१४।।

सर्व एते बुधाः रामभद्राश्च शिष्याः प्रियाः भारते रत्नरूपाः यदा।
ये हि चाऽन्येऽवशिष्टाः बुधास्तद्गुरु· कीदृशो देवलोके सुरैः पूज्यते।।१५।।

यस्त्रिपाठी जयश्च प्रकाशाऽन्वितो विज्ञरामानुजाचार्यवेदान्तगो।
विश्वविद्यालये संस्कृते शोभितोऽध्यक्षरूपेण सम्मानितो यः सुधीः।।१६।।

पण्डितः शान्तमूर्तिश्च रामप्रसादात्मजो रामवन्निश्छलो मानदो।
यश्च वैदुष्यपूर्णो रसज्ञप्रियस्तस्यवाणी सुधाऽऽप्लाविता दृश्यते।।१७।।

दर्शने यश्च संकायसंज्ञात्मकेऽध्यक्षलब्धप्रतिष्ठश्च डीनास्पदे।
यश्च विद्वत्प्रियः संस्कृतानां कुले सोऽभिवन्द्यः कथन्नैव विद्यावताम्।।१८।।

येन पितृप्रतिष्ठा च संरक्ष्यते येन विद्यादशाः जीवने पालिताः।
येन संज्ञा स्वकीया कृता सार्थिकातत्कथं सोऽनुकार्यो न विद्वज्जनैः।।१९।।

यः परेषां हितैषी सदाचारवान् यो विनम्रः स्वभावेन संशोभते।
यश्च गीर्वाणवाणीसुतो भ्राजते सद्गुरुः स प्रकाशो मया वन्द्यते।।२०।।

इत्थं पाणिनिशास्त्रपारगसुतैः शिष्यैर्धराऽऽपूरिता
विद्वान्सः परिपूर्णकर्णहृदयाः कुम्भाः सुधापूरिताः।
जाताः संस्कृतिसंस्कृताः कलियुगे कीर्त्या सदा चाऽन्विताः
ध्यात्वा रामप्रसादसंज्ञकगुरुं वाग्देवतारूपगम्।।२१।।

❑❑

# परमाऽऽराध्यविद्वन्मुकुटमणीयमानानां स्व. पं. श्रीरामवदनशुक्लमहाभागानां

श्रीरामदेशिकसं.म.वि. दारागंजप्रयागस्य पूर्वप्राचार्याणां कृते

# श्रद्धासुमनांसि प्रकीर्यन्ते

गोरक्षेतिपुरं पवित्रकुडराग्रामेण संशोभितम्,
गोत्रे तत्र च गर्ग सन्ततियुते शुक्ले तु वंशप्रिये।
जातो यो यदुनाथ शुक्ल विबुधो भाग्येन संशोभितो,
भार्यां प्राप्य शुभामुमां च लखराजीतिप्रियां सद्गुणाम्।।१।।

पुत्रस्तस्य तु भाग्यवान् गुणगणैर्युक्तश्च सूर्यप्रभो
विद्यावान् मतिमांश्च रामवदनः शुक्लस्तदीये कुले।
वैदुष्येण विभावितोऽमलधियाऽशेषेषु देशेषु यः,
प्रख्यातश्च प्रयागरूपवपुषा ज्ञानेन वाण्या सदा।।२।।

शुक्लो गर्गकुलावतंसविबुधः प्राचार्यवर्यश्च यः,
दारागंजप्रयागभूषणनिभे विद्यालये संस्कृते।
ज्ञानाऽऽलोकितरामदेशिकप्रिये शास्त्रप्रचारे प्रधीः,
पूज्यः पुण्यप्रदश्च रामवदनः श्रीवैष्णवत्वं गतः।।३।।

न्यायवेदान्तसांख्यादिकं हृद्गतं पाणिनीयं च शास्त्रं धृतं लीलया।
देवलोके च वाचस्पतिः पूज्यते, भारतेऽस्मिंश्च शुक्लस्तथा वन्द्यते।।४।।

देववाणी सदाऽऽराधिता जीवने, विष्णुभक्तिस्तथा स्वीकृता भूतले।
पूज्यपादश्च शुक्लो हि रामान्वितो वन्द्यते संस्कृतानां जनानां कुलैः।।५।।

भाष्यकारश्च पुत्रोद्वितीयश्च यो रंगनाथाऽत्मको वंशजो राजते।
भाष्यकारस्य भार्या च लालित्यगा देवनाथश्च सन्ध्यायुतो भ्राजते।।६।।

नाथयुक्तश्च जीवो हरिर्वर्तते, साधनायां च संल्लग्नता दृश्यते।
रंगनाथस्य पत्नी प्रिया चोर्मिला धर्मनाथो जयो नाथनाम्ना युतः।।७।।

दिव्यनाथश्च हर्षाऽन्वितो विद्यया नाथयुक्तो रविर्नाथनामाङ्कितः।
भाग्यवन्तः कुटुम्बस्य सर्वे जनाः सौख्यशान्त्यादिभिवर्धिताः सत्क्रियाः।।८।।

सर्व एते गुरोर्वंशजाः सज्जनाः पुष्पमालाकलापोपमास्तत्कुले।
नाकलोके गले ये गुरोः शोभिताः नन्दनोद्यानमालेव वक्षःस्थले।।९।।

रामनारायणोमिश्रगंगाप्रसादश्च शुक्लोहरिर्यः प्रपन्नः सदा।
विद्ययाभास्करो यो जगत्याः गुरूरामकृष्णस्त्रिपाठी च विद्वद्गुरुः।।१०।।

राघवाचार्य आदर्शरामाऽन्वितो यश्च पाण्डेयसंज्ञायुतो ज्ञायते।
यः प्रपन्नो हरिर्वेदवेदान्तगो यो मधोः सूदनो विज्ञधर्मान्वितः।।११।।

यो जगन्नाथकण्डेलनामा, प्रभुर्विश्वविद्यालयोच्चे पदे कीर्तिमान्।
डीनिवासश्च कण्डेलसंज्ञायुतो व्याकृतंतेन ज्ञातं मुदा सद्गुरोः।।१२।।

एतैर्ज्ञानविचक्षणैर्भगवतः शरणं च प्राप्तैः प्रियैः,
शिष्यैर्भारतरत्नकान्तिमतिभिः सम्भ्राजते सद्गुरुः।
लोकेऽद्यापि यशो हि यस्य विमलं स्वर्गेपताकायते,
सन्धार्यश्च कथन्न रामवदनः शुक्लो हि चान्तस्थले।।१३।।

❑❑

**श्री गुरुभ्यो नमः**

**परमश्रद्धेयपूज्यपादारविन्दविद्वन्मुकुटमणिलब्ध प्रतिष्ठोत्कृष्टप्रशासनसंगोष्ठीकुशलानां सहृदयोच्चकोटिप्रगल्भवक्तृत्वशक्ति-प्रकाशप्रसादितविद्वच्चेतसां भारतराष्ट्रपतिपुरस्कृतानां स्वाभिमानैकधनानां कर्तव्यनिष्ठानिष्ठितप्रत्युत्पन्नमतीनां सम्पूर्णे उत्तरप्रदेशे सम्माननितविद्वत्केसरिणां श्रीमहानिर्वाण-वेदविद्यालयस्य सर्वस्वभूतानां पूर्वप्राचार्यवर्य्याणामस्मद्गुरुचरणानां**

# पं. श्रीमानिकचन्द्रमिश्र-

**महाभागानां सादरं श्रद्धाकुसुमाञ्जलिरयं विलसतुतराम्**

मिश्रो मिश्रकुलावतंसशुभगो माणिक्यचन्द्रो हि यो,
वैदुष्येण विभूषितश्चविमलो लक्ष्म्या कुबेरो यथा।
वाणी यस्य रसैश्च कर्णमधुरा गीर्वाणवाणीयुता,
लालित्येन सुपूरिता श्रुतियुता पूज्याय तस्मै नमः।।१।।

विद्या यद्रसनाऽग्रनर्त्तनकरी पाण्डित्यपूर्णा सदा,
आदर्शेन सुशोभिताऽस्ति फलिता सेव्योपकारे रता।
सम्मानैश्च युता सभासु विमला प्रागल्भ्यपूर्णा शुभा।
वन्देऽहं च सुपूज्यपादकमलं कारुण्यपूर्णं गुरुम्।।२।।

प्रशासनं यज्ञसमं विधाय विद्यालयोत्कर्षणपारगो यः।
प्राचार्यवर्य्येषु पुरस्कृतो यस्तस्मै च पूज्याय नमो नमस्ते।।

निर्वाणवेदे विद्यालये यः प्राचार्यपीठस्थितपूज्यपादः।
उत्कृष्टसेवासुपुरस्कृतश्च श्रियाप्रदीप्तश्च गुरुर्मदीयः।।३।।

गृहस्थानां शुद्धे निरुपमपदे ह्याश्रमपदे,
तपस्वी विज्ञानी परमसरलः कर्मकुशलः।
प्रतिष्ठापूर्णो यः सहृदयजनानां हृदि विभुः
प्रदेशेऽशेषेऽभूत् सकलविदुषां नन्दनकरः।।४।।

त्वदीया प्रज्ञा या सदसि तव वाक्पाटवविधिः,
सदा धार्योऽस्माभिः सकलसुरवाणीस्थमतिभिः।
सुकार्येषूत्साहो धवलमतिता वाग्रुचिरता
ऽनुकार्याविद्वद्भिर्गुणगणगरिष्ठैश्च परमैः।।५।।

सदाच्छात्राणां त्वं सकलहितचिन्तासुनिरतः,
स्वसंस्थाध्यानेन प्रथमपदवीप्राप्तिसफलः।
त्वदीयं व्यक्तित्वं मनुजजनसेव्यं च विमलं,
वयं चित्तेन त्वां प्रति सततनत्याऽभिनमिताः।।६।।

विद्यया वपुषा वाचा सदौदार्येण पूरितम्
समुद्रमिव गाम्भीर्ये गुरुं पूज्यं नमामि तम्।।७।।

सर्वार्यविद्यालयशिक्षकश्च, भवत्कृपाभाजनतां गतोऽपि।
नाम्ना च यो लालमणिश्च नत्या, प्राप्तोऽस्ति त्वत्पाद सरोज मूलम्।।८।।

□□

# परमसहृदयः पं. श्रीकृष्णाकान्तशुक्लः
## (पू. प्राचार्यः)
## श्रीसर्वार्य आदर्श संस्कृतमहाविद्यालयप्रयागस्य

शुक्लः शुक्लकुलावतंसशुभगः पूज्यो बुधानां पतिः,
सारल्येन विभूषितश्च विबुधो गंगाप्रियो निर्मलः।
कृष्णाकान्त इति प्रसिद्धिमहितो यागप्रयागाऽन्वितः,
वन्द्यो देवगुरुर्यथा हि विबुधैः पाण्डित्यपूर्णैः सदा।।१।।

सर्वार्यस्य महद्विभूतिकरणः स्वीयैः प्रभावैर्महान्,
कृष्णाकान्तगुरुश्च देवसदृशः स्वर्गं गतो जीवितः।
शास्त्राणां प्रविचारसारनिलयाऽऽरामेविहारी सदा,
गर्गः शुक्लकुले च कंजसदृशोवन्द्योभिनन्द्योऽस्ति सः।।२।।

दारागंज इति प्रसिद्धविभवे निर्वाणवेदे च यः,
संस्थाने विबुधं गुरुञ्च कमलाकान्तं प्रसिद्धं पटुम्।
प्राप्याऽधीतिविभूषणो गुरुगुर्वेदान्तविद्यायुतः,
वेदाङ्गत्वगपाणिनीयममलं शास्त्रं ततः संश्रुतम्।।३।।

विद्या तद्रसनाग्रनृत्यकरणा वाणी च सत्याऽन्विता,
कार्यं तस्य परोपकारसहितं चाऽध्यापनं सम्मतम्।
छात्राणां हितकर्मणाऽभिनिरतः सर्वार्यविद्यालये,
स्वर्गे देवयुतस्सदा च विमलः शान्तिं सुखं चाऽऽप्नुयात्।।४।।

विद्यादानविधानमर्मसुमतिर्निलोभमानी सुधीः,
सम्मान्योविबुधप्रियश्च सुधियां सभ्ये समाजे हृदा।
चोत्साही तु सुशोभितः शुभगुणैः षट्कर्मभिः संयुतः,
प्राचार्येषु सदैव पूजितपदश्रद्धाञ्जलिं प्राप्नुयात्।।५।।

□□

# डॉ. रामकृष्णत्रिपाठी

**( भू.पू. प्राचार्यः )**

**श्रीहरीरामगोपालकृष्ण सं.म.वि., प्रयागस्य**

मेजाक्षेत्रयुतप्रयागप्रथिते ग्रामे शुभे जन्मभूः
सम्मानेन युतस्त्रिपाठिविमले वंशे जनिर्यस्य च।
लक्ष्मीवान् गुणिनां गणैश्च विनुतः श्रद्धाऽन्वितः सर्वदा,
सम्मान्यः स च भूसुरो भगवती दत्तः प्रसादो मया।।१।।

पुत्रस्तस्य च रामकृष्णविबुधः सूर्यप्रकाशात्मको
विद्यावान् स च सूक्तिमांश्च तपसादेदीप्यमानो हृदि।
आदर्शः सुचरित्रवैभववतां धर्मात्मनां ज्ञानिनां,
योगेनैव धरातले वितनुते स्वीयं यशो निर्मलम्।।२।।

रामकृष्णस्त्रिपाठी हरीरामगोपालकृष्णे तु विद्यालये संस्कृते।
शक्तप्रचारायवर्यः प्रयागे प्रतिष्ठास्वरूपं स्वरूपं वितन्वन् स्थितः।।३।।

येन साहित्यविद्याप्रचारः कृतः पाणिनीयं च शास्त्रं सदा विस्तृतम्।
येन विद्यालयोत्कर्षणं संस्कृतं तस्य शिष्याः प्रसिद्धिं गताः भूतले।।४।।

रामकृष्णस्वरूपो बुधः पण्डितो धर्मशास्त्रेतु पारंगतो भ्राजते।
ब्राह्मणानां च कृत्यैः सदा संयुतो यो हि विद्वांस्तपश्चर्यया शोभते।।५।।

यश्च काश्यां प्रयागे च देवार्चनैः पूतचित्तो धरायां प्रकाशान्वितः।
ब्रह्मचेतास्तपस्वी सदा मूर्तिमान् सोऽनुकार्यः कथन्नैव विद्वज्जनैः।।६।।

अधीतिबोधाचरणप्रचारैः साहित्यशास्त्रं खलु पाणिनीयं,
वेदान्तविद्यायुतधर्मशास्त्रं प्राचार्यते येन कलौ युगेऽस्मिन्।।७।।

श्यामा तु पत्नी हृदये च रामं कृष्णं च धृत्वा नतमस्तका च।
पतिव्रतानां धुरि कीर्तनीया स्वर्गं गता संगमतीर्थमूले।।८।।

सा रामकृष्णाऽर्पितचित्तवृत्तिः
श्यामा यथा ब्रह्मनिविष्टशक्तिः।
मेलापके संगमतीरथगे च,
विमानमारुह्य दिवं गता हि।।९।।

पूज्याऽभिनन्द्यश्च सदाऽनुकार्यो,
विद्याऽनुरागैः श्रुतिशान्तपापैः
आराधनैः संस्कृतसंस्कृतीना-
मथ मादृशामल्पधियां स पूज्यः।।१०।।

यस्य कृत्यं च शास्त्राऽनुकूलं सदा,
येन गंगा तु माता मुदाऽऽराध्यते।

येन सर्वार्यविद्यालये संस्कृतं,
पाणिनीयं च शास्त्रं व्यधीतं हितम्।।११।।

यो गुरुः शास्त्रिणां न्यायशास्त्राऽन्वितः,
निस्पृहो ज्ञानविज्ञानधाराऽयुतः।
श्रेष्ठसिद्धान्तवादी च रामानुरागी च
कृष्णप्रियो रामकृष्णः कुले।।१२।।

❑❑



# श्रद्धाञ्जलिपत्रम्

श्री

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयवाराणसीव्याकरणविभागाध्यक्षपदनिवृत्तानां

परमपूज्यानां सहृदयहृदयानां प्रथितविदुषां

**स्व. डॉ. श्रीकान्तपाण्डेय**प्रथममहोदयानां कृते

श्रद्धाप्रसूनाञ्जलिर्विलसतुतराम्।

'भावपूर्णेन युक्तो मया श्रद्धया चाञ्जलिर्दीयते'

पूज्यश्रीकान्तपाण्डेयनाम्ना, ये प्रसिद्धिं गताः भारते,
विश्वविद्यालये संस्कृते संस्कृतस्य प्रचारे रताः।
ज्ञानिनां स्वाभिमानैर्युतानां, श्रद्धया चाञ्जलिर्दीयते।।१।।

तत्प्रतिज्ञा दृढाऽसीत् सदा, व्याकृते ख्यातपाण्डित्यगानाम्।
शुभ्रसारल्यमूर्तिर्यदीया, दृश्यतेऽहर्निशं सज्जनैः,
स्वर्गप्राप्त्या शिवे संयुतानां, श्रद्धया चाञ्जलिर्दीयते।
विद्यया दिव्यवाचा च तेषां, स्वस्वभावेन सम्मानगाना-
मत्युदारोपकारप्रियाणां पूर्वजानाञ्च शान्तिप्रदानाम्।
मद्गुरूणां च वात्सल्यभाजां, श्रद्धया चाञ्जलिर्दीयते।।२।।

विश्वनाथस्य दिव्यां कृपां, प्राप्य रात्रौ शिवस्यैव ये
पूजनं तद्व्रतं श्रद्धया पूरितं चैव कृत्वा मुदा।
जन्मसाफल्यप्राप्त्याऽमराणां, श्रद्धया चाञ्जलिर्दीयते।।३।।

कमलया युतकान्तसुन्तः प्रियः,
सकलशुभ्रगुणैः परिपूजितः
ललितया युतकीर्तिपुरस्सरो
विजयते भुवि शम्भुकृपायुतः।।४।।

सदा शिष्याणां त्वं सकलहितचिन्तासुनिरतः,
स्वसंस्थाध्यानेन प्रथमपदवीं प्राप्य सुफलः।
स्वसिद्धान्तेनैवं सदयहृदयः काव्यरसिकः,
सदा स्वर्गे शान्तिं भगवति रूचित्वं त्वमगमः।।५।।

सारस्वते स्रोतसि सन्निमग्ना,
सम्भ्राजिता संस्कृतिसंस्कृता च।
श्रीकान्तपाण्डेयगुरोर्गृहे तु,
विद्वत्सभा मंगलमातनोतु।।६।।

सम्मेलने बुधजनैर्भरितेऽजिरेऽस्मिन्,
पूज्यान् गुरूंश्च वात्सल्ययुतान् विभूंश्च।
कार्तार्थ्यभावसम्पूरितचित्रवृत्तिः,
काश्यां नतो नमति लालमणिश्च मूर्ध्ना।।७।।

❑❑

# अभिनन्दनपत्रम्

**परमश्रद्धेयसम्पूज्यपादारविन्दसंस्कृतकविकुलकण्ठाभरण-**
**सुप्रतिष्ठितविद्वन्मुकुटमणीयमानानां**
**सहृदयहृदयाह्लादकारिणामनेकशिष्यविटपसम्बर्द्धनकुशलानां**
**साहित्याकाशे दिनकरकरायमाणानां**
**श्रीमहानिर्वाणवेदसंस्कृतमहाविद्यालयप्राचार्यप्रतिष्ठितपदमलंकृतवतां**
**महामहोपाध्यायाद्यनेकप्रशस्तिसम्मानालंकृतास्मद्गुरुचरणानां**
**डा. हीरालालपाण्डेय महाशयानां चरणकमलमूले**
**विकीर्णोऽयं काव्यकुसुमांजलिर्विभातुतराम्।।**

रामप्यारिसुतस्य यो भगवती प्राप्तः प्रसादः पिता,
पुत्रस्तस्य सुलक्षणैश्च भरितः साहित्यपाथोनिधिः।
वास्तव्यः शुभसोनभद्रसमरीग्रामस्य जातो विभुः,
हीरालाल इतिप्रसिद्धविबुधः पूज्यो गुरुः सर्वदा।।
विद्यावारिधिधर्मशास्त्ररसिकः सारल्यपूर्णो मुदा,
ग्रन्थानां च सुगुम्फने पटुमतिः प्रागल्भ्यभावश्च यः।।१।।

शिष्याणां हितचिन्तनेषु निरतो विद्यावतां सद्गुरु,
वंन्देऽहं विमलस्वभावसुधियं पाण्डेयसंज्ञं हि तम्।।२।।

हीरालाल इति प्रसिद्धिविभवाः साहित्यविद्याविदः,
वैदुष्येण सुशोभिताः सुकवयो दीप्तैर्गुणैर्भ्राजिताः।

काव्यादीनि कृतानियैर्हि सफलान्यातीतगानानि च,
तच्छिष्येण विनीत लालमणिना पूज्या मया साम्प्रतम्।।३।।

काव्यं नैकविधं च येन विहितं नाट्यान्यनेकानि च,
संख्या चाऽत्र चतुर्दशत्वसहिता संस्कारदात्री जने।
प्राचार्यस्य पदं च येन सफलं निर्वाणवेदे कृतम्।
नौमीड्यं कविवर्यमानसममुं शुभ्रं मरालं गुरुम्।।४।।

कुम्भसमुद्भवशौनःशेपम् वर्वरीकशौर्यादियौतुकम्।
युतकयाचनं भारतवैभवमादिगुरोर्दक्षिणाहेतुकम्।।
परिस्पन्द इति सर्वं नष्टं, देशे समगताऽहं चेत्थम्।
शेमुषीति सुच्छन्दप्रबन्धश्चाद्यपण्डितं रचितं गुरुणा।।५।।

प्रदेशेऽशेषे यः प्रथितविदुषां नन्दनकरो,
गरिम्णा पाण्डेयो गुणगणगरीयांश्च कलितः।
प्रतिष्ठावान् विद्वान् सहृदयगणानां हृदि प्रियो,
मदीये चित्ते त्वं निशि च दिवसे स्थानमगमः।।६।।

गंगातटेऽस्मिन् प्रथिते प्रयागे, विद्यालये संस्कृतसेवनेन।
संवर्द्धनेनाऽद्य गुरूर्हि जातो, माली प्रियच्छात्रसुपादपानाम्।।७।।

निर्वाणवेदविद्यालयप्रांगणेऽस्मिन्, मान्यं गुरूं च वात्सल्यप्रभावशोभम्।
कार्तार्थभावसम्पूरितचित्तवृत्तिः, शिष्यो बुधं नमति लालमणिस्तु मूर्ध्ना।।८।।

□□

# अभिनन्दनपत्रम्

परमश्रद्धेयविद्वन्मुकुटमणिलब्धप्रतिष्ठोत्कृष्टसेवाप्रशासनसंगोष्ठीकुशलानां
सहृदयोच्चकोटिप्रगल्भवक्तृत्वशक्तिप्रसादितविद्वच्चेतसां
समग्रभारतवर्षोद्धूयमानयशःपताकानाममरवाणीराष्ट्र
वाणीरचितमहाकाव्यप्रस्त्रवितरसानां
प्रयागशिमलाख्यविश्वविद्यालयसंस्कृतविभागोत्कृष्णपदपुरस्सरं
श्री सं.सं. वि.वि. वाराणसीकुलपतिपदाऽलंकृतानां
महाकविशिरोमणिनवपद्धतिविहितविश्वविद्यालयक्रियाप्रणाली
प्रसादितसंस्कृतविदुषां **डॉ. राजेन्द्रमिश्रा**ऽभिराजमहोदयानां
सादरमभिनन्दनाय प्रस्तुतोऽयं
काव्यकुसुमाञ्जलिर्विलसतुतराम्।

ख्याते जौनपुरे प्रसिद्धविभवे द्रोणीपुरे संस्थितः,
सौभाग्येन सुपूरितश्च विमलः कान्ताऽभिराजीयुतः।
सम्मानेन सुपूज्यपादकमलो दुर्गाप्रसादो हि यः,
संसारेऽत्र सुकीर्तिजीवित इव श्रद्धाञ्जलिं प्राप्नुयात्।।१।।

पुत्रो ज्ञाननुतो यथा सुरगुरुर्दुर्गाप्रसादस्य यः,
मिश्रो मिश्रकुलावतंसशुभगो राजेन्द्रनामा गुरुः।
वाणी यस्य रसैश्च कर्णमधुरा गीर्वाणवाणीप्रिया,
साहित्येन सुपूरिता श्रुतिविभा मान्याय तस्मैनमः।।२।।

विद्या यद्रसनाऽग्रनर्त्तनकरी पाण्डित्यपूर्णा सदा,
चाऽऽदर्शन सुशोभिताऽस्ति कलिता सेव्योपकारे रता।
विज्ञानेन युता सभासुविमला प्रागल्भ्यपूर्णा शुभा,
वन्देऽहं विबुधं प्रियं कविगुरुं राजेन्द्रमिश्रं मुदा।।३।।

कुले तस्मिन् जातः सहृदयधुरीणो विभुयुवा,
कवीनां संख्याने प्रथमपदवीं प्राप्य विनुतः।
महामान्यो ज्ञानी सदयकुलकासारकमलम्,
समग्रे विश्वस्मिन् स्वमतिविकसद्ज्ञानफलितः।।४।।

स्वदेशेऽशेषे यः सकलविदुषां नन्दनकरो,
ऽभिराजो राजेन्द्रो गुणगणगरिष्ठश्च रसिकः।
प्रकृष्टो वक्ता यो विवुधगणसम्मानितसुधीः,
प्रचारं विद्यायाः सदसि कृतवान् मंगलमयम्।।५।।

तदीया प्रज्ञा या सदसि नववाक्पाटवविधिः,
सदा धार्याऽस्माभिः सकलसुरवाणीस्थमतिभिः।
स्वनीतौ चोत्साहो धवलमतिता वाग्रुचिरता,
ऽनुकार्या विद्वद्भिः सहृदयजनैः काव्यरुचिभिः।।६।।

प्रशासनं यज्ञसमं विधाय काव्यप्रचाराय सदा सुयत्न-
श्चोत्कृष्टविद्यासुपुरस्कृतश्च राजेन्द्रमिश्रो नृपतिः कुलस्य।।७।।

कुलपतिः सुकृतिः सुमतिः सुधीः,
सरससौम्यसुधामयवाक्प्रियः।
स तु समो विदुषां हितचिन्तको,
विजयते कविराजसुकेसरी।।८।।

भवत्कृपाभाजनतां गतो हि सर्वार्यविद्यालयशिक्षकश्च।
नाम्ना तु यो लालमणिः प्रणत्या प्राप्तो भवत्पादसरोजमूलम्।।९।।

□□

# अभिनन्दनपत्रम्

परमश्रद्धेयबौद्धदर्शनविलसितविभूनां
नीरक्षीरविवेकराजहंसरूपाणामुत्कृष्टप्रशासनप्रणालीप्रथितानां
संस्कृतजगदाकाशोद्धूयमानयशःपताकानां
भ्रष्टाचारविनाशकृतनिरन्तरसंघर्षनिर्मलसिद्धान्तानां
यदुकुलभूषणकृष्णइवानाचारनिशाचरवृन्दान्तकानां
संस्कृतविद्वत्कल्याणकरणक्रियमाणनिरन्तरप्रयासानां
श्रीसम्पूर्णानन्दसंस्कृतविश्वविद्यालयवाराणसी-
कुलपतिपदमलंकुर्वतां **प्रो. यदुनाथद्विवेदि**महाशयानां
सादरमभिवन्दनाय प्रस्तुतोऽयं
काव्यप्रसूनाञ्जलिर्विलसतुतराम्।

विश्वस्मिन् प्रथितप्रयागविमले क्षेत्रे तु नीवीकला-
ग्रामे रामप्रियप्रसिद्धविभवः कैलाशनामागुरुः।
गंगा यस्य प्रिया गृहे च वनिता गंगास्वरूपा च या,
मान्यं येन कुलं द्विवेदिविमलं जातं समाजे सदा।।१।।

पुत्रस्तस्य सुलक्षणैश्च विनुतो योग्यश्च चन्द्रो यथा,
पत्नीं प्राप्य च पूर्णिमां च सकलां सम्मोदते खे मुदा,
कर्मण्यः सदसद्विवेकनिपुणश्चान्नाहजारे यथा,
हीदृक्षो यदुनाथनामकसुधीः कुर्यात् सदामंगलम्।।२।।

तत्सुतापल्लवीज्ञानविज्ञानगाश्रेष्ठकोटिं च सम्प्राप्य सम्मानिता
विद्यते यद्द्वितीया सुता मंजरी सा तु विज्ञानमानासु सम्मानिता।।३।।

सर्वत्रसंस्थानकृतप्रयासः साफल्यगो नीतिपटुर्धरायाम्।
न्यायप्रियो मानधनाग्रगण्यः सम्मान्यतेऽस्मिन् विदुषां समाजे।।४।।

कर्तव्यनिष्ठाधृतभूरिभारः काश्यां स्वसंस्थाप्रथमं पदं च।
प्राप्तः सुधीर्भ्रष्टसमाजशत्रुः संचालकः प्रीतियुतो बुधेषु।।५।।

त्वदीया प्रज्ञा या सदसिनव वाक्पाटवविधिः
सदा धार्योऽस्माभिः सकलसुरवाणीस्थमतिभिः।
स्वकार्येषूत्साहो धवलमतितानीतिपटुता,
ऽनुकार्या विद्वद्भिः सहृदयजनैधर्मरुचिभिः।।६।।

विद्यया वपुषा वाचा सदौदार्येण सम्भृतम्।
समुद्रमिव गाम्भीर्ये द्विवेदिनं नमामि तम्।।७।।

❑❑



# अभिनन्दनपत्रम्

सौदामिनीसंस्कृतमहाविद्यालयप्रयागः
परमश्रद्धेयविद्वन्मुकुटमणिलब्ध प्रतिष्ठोत्कृष्ट
सेवाप्रशासनसंगोष्ठीकुशलानां
सहृदयोच्चकोटिप्रगल्भवक्तृत्वशक्तिप्रसादितविद्वच्चेतसां
काव्यामृताप्लावितान्तरात्मनां दिग्दिगन्तोद्धूयमानयशः
पताकानाममरवाणी राष्ट्रवाणीविज्ञानिनां
महामहोपाध्यायविद्यावारिधिडी.लिटाद्यनेकोपाधिसम्भूषितानां
नैकोच्चकोटिसंस्थानसर्वोच्चपदप्रतिष्ठितानामभिनवप्रणाली
विहितविश्वविद्यालयपद्धतिप्रभावितनैकविद्याविदामनेक-
पुरस्कारपुरस्कृतानामुज्जैनस्थश्रीमहर्षिपाणिनि
संस्कृतविश्वविद्यालयकुलपतिपदभाजां
**डॉ. मिथिला प्रसाद त्रिपाठि**महाशयानां-
सादरमभिनन्दनाय प्रस्तुतोऽयं काव्यकुसुमांजलिर्विलसतुतराम्

रीवाक्षेत्रजनिस्त्रिपाठिसुधियां वंशावतंसश्च यो,
वैदुष्येण सुशोभितश्च मिथिलां प्राप्तः प्रसादो मुदा।
सौभाग्येन सुपूरितो हि विमलो लक्ष्मीपतिः सर्वदा
वन्देऽहं बुदुनप्रसादजनितं सम्माननीयं हितम्।।१।।

विद्या यद्रसनाग्रनर्तनकरी, पाण्डित्यपूर्णा शुभा,
सा ऽऽदर्शनेन विभाविताऽस्तिफलिता सेव्योपकारेरता।
विज्ञानेन युता सभासु विमलाप्रागल्भ्यपूर्णा सदा
वन्देऽहं विबुधप्रियं च रसिकं लक्ष्मीयुतं भावुकम्।।२।।

कुलेशुभ्रे जातः सहृदयधुरीणो विधुरिव,
गुणानां संख्याने प्रथमपदवीं प्राप्य विनुतो।
महामान्यो ज्ञानी सदयकुलकासारकमलम्,
समग्रे विश्वेऽस्मिन् स्वमतिविकसन्मानफलितः।।३।।

स्वदेशेऽशेषे यः सकलविदुषां नन्दनकर-
स्त्रिपाठी साहित्येगुणगणगरिष्ठश्च शुभगः,
प्रकृष्टोवक्ता यो विबुधगणसम्मानितसुधीः
प्रचारं विद्यायाः जगति कृतवान् मंगलमयम्।।४।।

त्वदीया प्रज्ञा या सदसिनववाक्पाटवविधिः,
सदा धार्योऽस्माभिः सकलसुरवाणीस्थमतिभिः।
सुनीतौचोत्साहो धवलमतिता वाग्रुचिरता,
ऽनुकार्या विद्वद्भिः सहृदयजनैः शास्त्ररुचिभिः।।५।।

प्रशासनं यज्ञसमं विधाय, विद्याप्रचाराय सदासुयत्नश्।
चोत्कृष्ट विद्यासु पुरस्कृतश्च त्रिपाठिवंशेनृपतिः प्रियश्च।।६।।

कुलपतिः सुकृतिः सुमुतिः सुधीः,
सरससौम्यसुधामयवाक्प्रियः।
स तु समो विदुषां हितचिन्तको,
विजयते मिथिलाकृपया सदा।।७।।

□□

# श्रीस्वामीशङ्कराचार्यवासुदेवानन्द-महाभागानां स्वागतम्

भावपूर्णेन युक्तं हृदा स्वागतं वच्म्यहं स्वागतम्।
तीर्थराजे सभा संगता पूज्यविद्वज्जनैः संयुता
ज्ञानविज्ञान धारान्विता धर्मसम्पद्युता भ्राजिता।
आगतानां जनानां कृते स्वागतं वच्म्यहं स्वागतम्।।१।।

वासुदेवोऽस्ति नन्दाप्रियः शंकराचार्यनामागुरु
येन देशे विदेशे सदा डिण्डिमो धर्मघोषः कृतः।
तस्य पूज्यस्य चाऽस्मिन् दिने स्वागतं ....।।२।।

देववाणी दिनं मच्छुमं चेत् कृपा स्यात् त्वदीया तदा
पूजनं मन्दबुद्ध्याऽद्य भोः स्वीकृतं चास्तु वाचा कृतम्।
संस्कृतेऽस्मिन् दिने श्रद्धया, स्वागतं ....।।३।।

पुष्पमालादिकं नैव भोः नैव मिष्टान्नभोज्यं विभो
येन जातः समर्थोऽर्चने नैव तुष्टिश्च संजायते।
ज्ञानिनां मानवित्तैर्युतानां सादरं वच्म्यहं स्वागतम्।।४।।

शङ्कराचार्यपीठेशत्वं पूर्णदेशे पताकायितो,
येन धर्मस्य संस्थापनं संस्कृतं संस्कृतं रक्ष्यते।
त्वं ह्यलोप्यश्च क्रोडाश्रितः सादरं वच्म्यहं स्वागतम्।।५।।

शक्तिबुध्यादि शास्त्रादि भिर्नाऽस्ति काचिद्गतिर्मे विभो
येन नाऽहं समर्थोऽर्चनेऽस्यां सभायां त्वदीये शुभे।
पूज्य वाग्देवतावल्लभोऽहं सादरं वच्म्यहं स्वागतम्।।६।।

□□

हरियाणापटौदीनामके आश्रमे

## श्री श्री १००८ धर्मदेव जी महाराजमहोदयानां

# स्तुतिः

आश्रमे मंगले यत्र विद्यालयः संस्कृतोऽनेकविद्यायुतो राजते।।

यैर्व्यवस्थापितोऽयं तपोनिष्ठितैर्
जन्म धन्यं जनानां च तेषां सदा।
देवदेवाऽधिदेवस्वरूपोऽमरः
कृष्णदेवेनयुक्तो मुदा राजते।।१।।

न्यायवेदान्तविद्या सुरक्षा कृता,
पाणिनीयञ्च तेनाऽस्ति सम्भ्राजितम्।
धर्मदेवश्च पूज्यः सदा निर्मलो,
येन देशः पटौदी सदा शोभते।।२।।

अत्र दानञ्च नानाविधं दीयते,
पालनं मुक्तिदं सर्वदा धार्यते।
यस्य कृत्यं च धर्मप्रचारोऽस्ति भोः
दिग्दिगन्ते च यस्य प्रभा राजते।।३।।

येन मानश्च विद्यावतां रक्ष्यते,
संस्कृतं रक्षितं संस्कृतिः रक्षिता।
धर्मशास्त्रामृतं दीयते हे प्रभो,
तत् कृपो तावकीनां सदा कामये।।४।।

धर्मदेवस्वरूपेण साक्षात् प्रभुः,
लीलयाऽस्मिन् प्रदेशे सदाऽऽराध्यते।
देववाणीयुता काव्यधारा सुधा,
त्वत्कृपां प्राप्य विद्यालये राजते।।५।।

❑❑



श्रीमत्परमपूज्यदण्डिस्वामिनां
श्रीरवीन्द्राश्रमपदमलंकुर्वतां चौसठीघट्टवाराणसी-
संस्थितानां कैवल्यगतानां कृते

## श्रद्धाञ्जलिः

ख्यातो ब्राह्मणसंकुलो जनपदो मिर्जापुरं वर्तते,
ग्रामस्तत्र पवित्रभूर्हिविभवः उस्कावसेराऽभिधः।
मिश्रोमिश्रितसद्गुणश्च स्वकुले वै ठाकुरः शोभितः,
सम्प्राप्तः श्वसुरालयं बकुशनीपत्न्या दयालो युतः।।१।।

पाण्डेयश्च सुभाग्यवांस्तु सुमतिर्वीरो महापौरुषो,
वासस्तस्य प्रियं शुभञ्च विमलं शुक्लं पुरं राजते।
आयातः समवाप्य सम्पदमतः ग्रामे तिवारीपुरे,
हीदृक्षः स तु ठाकुरः सुप्रथितोमिश्रोदयालो बुधः।।२।।

योऽमृतोलालसंज्ञात्मकश्च प्रभु-,
र्यो रवीन्द्राश्रमस्याऽग्रजो मानितः।
यश्च नाकं गतोऽल्पायुषा जीवने,
ब्रह्मरूपेण यातो गयां पूजितः।।३।।

कोराँवेति प्रसिद्धिसिद्धिसहिते गाढेतिपत्रालये,
ग्रामः सत्पुरुषः प्रकाशमतिमान् धामस्तिवारीपुरः।
मान्यो रामगरीबमिश्र विबुधो जातो दयालोः सुतः,
काश्यां पूज्यरवीन्द्रसंज्ञकमुनिः स्वं जीवनं त्यक्तवान्।।४।।

दण्डिस्वामिपदं च येन विमलं प्राप्तं शुभे चौसठी-
घट्टे शङ्करमन्दिरं च सुखदा काशी तु संसेविते।
सायंकालविधीयमानभजने चार्तिक्यकालाश्रमे,
मुक्तिं प्राप्य प्रमोदते स विबुधैः साकं तु नाकेऽधुना।।५।।

पत्नी यस्य च रुक्मिणी गुणयुता कृष्णप्रिया रुक्मिणी,
पुत्रो 'रामसखी'पतिर्भगवतो भक्तः कथावाचकः।
ज्येष्ठो तन्मुखियेति 'नाथ'प्रमुखो नाम्ना'ऽमरः' पण्डितः,
'कृष्णाकान्ति'पतिश्च लाललखनो मिश्रः द्वितीयः सुतः।।६।।

चारित्र्येण तु लक्ष्मणश्च विनुतो रामाऽनुगः सर्वदा,
ब्रह्मानन्दपिता सुभाग्यविभवो ज्ञानेन संशोभितः।
तत्पुत्रत्रयशोभिनन्दसहितः सच्चित्शिवानन्दनो,
लोकेऽस्मिन् प्रभुतात्मरामलखनो वेदत्रयीसंयुतः।।७।।

ब्रह्मानन्दयुता तु 'प्रेम'सहिता पत्नी च मिश्राऽन्विता,
'सीमां' प्राप्य प्रमोदते गुणगणैर्युक्तां 'सुनीतां' तथा।

तत्पुत्रौ 'भृगु''देव'नामक बुधौ संज्ञर्षिणा संयुतौ,
कन्ये द्वे च 'सुधा'प्रिया तु विनता 'श्रद्धा'स्वरूपेति सा।।८।।

समग्र आनन्दनदः सनन्दनः सनातनो यो विजयोऽस्तिनन्दनः।
मुनी रवीन्द्रो रविरूपतां गतो जगाम देवैः सह भक्तिभाग् यः।।९।।

ब्रह्मानन्दयुतस्तु मिश्रप्रभुतां प्राप्तश्च शुभ्रे कुले,
गङ्गानाथप्रिये च संस्कृतयुते पीठे तु केन्द्रात्मके।
चाऽध्येतास्तिसुसंस्कृतश्च सुबुधः श्रीमान्सदाचारवान्
लोकेऽस्मिन् सुफलोभवेत् शुभगुणैर्दुर्गाकृपापूरितः।।१०।।

□□

## माननीयो महान् श्री सीतारामाचार्यः-
## संस्थापकः श्रीरामदेशिकमहापीठस्य।।

पट्टीक्षेत्रयुते प्रतापगढ़गे ग्रामे प्रसिद्धे सदा,
सीतारामकृपाऽन्विते च ढिढुईपत्रालयो वर्तते।
जातस्तत्र च धर्मराजिसहितो ह्याचार्यवर्यश्च यः,
सीतारामगुणैर्नुतश्च भगवान् दत्तप्रकाशः कुले।।१।।

दारागंजप्रयागमार्गसविधेसंस्थापितश्चाश्रमः
धर्माचार्यबुधेन निर्मलधिया धर्मस्य रक्षा कृता।
साधूनां च निवासपूतवसतिः संस्थापिता संगमे,
स्वर्गीयः प्रभुभक्तिलीनसुतनुर्वैकुण्ठगामी श्रियाः।।२।।

लोके यो ह्यधुनाऽपि जीवितगुरुः पूज्यस्त्रिपाठी युगे,
शाण्डिल्यस्य मुनेश्च गोत्रजनितः शाण्डिल्यरूपाऽन्वितः।
ख्यातो भारतवर्षभूमिविमलस्थानेषु तीर्थेषु च,
वन्दे तं करुणानिधिं विभुगुरुं रामं च सीताप्रियम्।।३।।

□□

# महर्षिमहेशयोगिनः आश्रमे गुरुपूर्णिमायां गुरुमहत्त्वम्–

त्रिपाठिलालो बहुमोहनश्च,
वसन्तसंशोभितमानभाग्यः।
पूजां गुरूणां गुरूपूर्णिमायाम्
करोति धन्याश्रमपण्डितेषु।।१।।

अत्रागताः भक्तियुताः गुरूणां
वेदैः पुराणैः कृतपुण्यभाजः।
ते मर्त्यलोकेऽर्जितधर्मपालाः
धन्याः भवेयुर्गुरुपूजनेन।।२।।

ज्ञानं च दत्वा विधिना गुरूर्यो-
ऽज्ञानं ततं दूरगतं करोति।
चान्तर्गतं भावविभावनं यः
स गुरुस्तु पूज्यो हृदयेन मूर्ध्ना।।३।।

अत्राश्रमेऽद्यैव सभा विधानम्
दानं च पूजा हवनादिकं च।

वेदप्रचारेण च शुद्धिपूर्णं
चित्तं समेषां भुविनिर्मलं च।।४।।

गुरोः प्रभावो न तु वर्णनीयः,
अगम्यरूपेण प्रकाशरूपः।
संसारयात्रा न भवेत् विना हि,
तं सर्वपूज्यं गुरुमानतोऽस्मि।।५।।

महेश योगिन्! सकले च लोके
ख्यातिं च लब्ध्वाऽर्जितधर्मपुंजस्
त्वं पुण्यरूपो विभवैः प्रभुश्च
कल्याणकारी जगतीतले हि।।६।।

एवं प्रकारेण सदा भवेद्धि,
धर्मप्रसारो भुवि योगयोग
आशीर्हि देया भगवन् त्वया तु
येनाऽद्य सौख्यं च शुभं लभेय।।७।।

□□



# श्रद्धाञ्जलिः

**परमादरणीयब्रह्मचर्यव्रतपूतहृदयव्याकरणसाहित्यदर्शन–पारावारपारंगतस्य सरलहृदयवात्सल्यभावपूरित गुणगणगरिष्ठस्याचार्य जयत्श्यामब्रह्मचारिणः श्री शिवशर्मा सं.म.वि., दारागंज प्रयाग प्राचार्यस्य प्रस्तुतानि कृते काव्यकुसुमानि श्रद्धाञ्जलिमयानि वितीर्यन्ते।**

स्वर्गीयगोस्वामिसुतः प्रभुश्च, जातोऽन्नपूर्णाजठरात् प्रसूतः।
ब्रह्मण्यविद्याकृतभूरिभक्तिर्मान्यो जयत्श्याम इति प्रसिद्धः।।१।।

साहित्यशास्त्रस्यसुपाणिनीयस्याचार्य आदर्शनशास्त्रगामी।
शुक्लो यजुर्वेद इति प्रसिद्धः कण्वस्वरूपा सुधियश्च शाखा।।२।।

शेषोमणिर्यस्य गुरुर्गरीयान् शुक्लश्चरामो वदनो महीयन्।
आद्याप्रसादश्च सुशिक्षकत्वं प्राप्ता इमे संस्कृतसेवकाश्च।।३।।

गंगातटेऽस्मिन् प्रथिते प्रयागे तीर्थाधिपे संस्कृतसेवया च।
स्वीयं च पुण्यं समयं समाप्य गोलोकप्राप्तिं कृतवान् सुधीश्च।।४।।

अध्यापने ग्रन्थसुगुम्फने यः सम्भाषणे संस्कृतसेवने च।
देवार्चने चार्यविधानकार्ये जातः पटुः राष्ट्रपतिप्रशस्तः।।५।।

पुर्यां च प्राप्तो ह्यमृतः प्रयागे स्वर्गं च प्राप्तो विमलैर्यशोभिः।
वैदुष्यपूर्णः सरलस्वभावः श्रद्धाञ्जलिं प्राप्य सुखीभवेच्च।।६।।

प्रशासनं धर्म इति प्रधार्य विद्यालयोत्कर्षणकारकश्च।
प्राचार्यरूपेण पुरस्कृतो योऽच्युतगोत्रजोऽपिस्वर्गं गतश्च।।७।।

❑❑



## पं. श्री मार्कण्डेयनारायणशुक्लः

### (प्राचार्यः) श्री सर्वार्य आ. सं.म.वि., प्रयागस्य

शुक्लाः शुक्लकुलेऽवतंससदृशाः
सारल्यपूर्णाः प्रियाः,
लक्ष्म्या दत्तवराः कुबेरपथगाः
सम्मानयोग्याः सदा।।१।।

सर्वार्याः मम पाठशालसुधियः
प्राचार्यवर्याश्च मे
मार्कण्डेय सुसंज्ञया
सुफलिताः नारायणाः सर्वदा।।२।।

□□

## आचार्यसनत्कुमारत्रिपाठी
## प्राचार्यः श्री रामदेशिक सं.म.वि., प्रयागस्थ।

पुत्रस्तस्य सनत्कुमारमुनिवत् ध्यानेन विष्णुप्रियः,
सम्मान्यः सरलश्च निर्मलमतिः सर्वोपकारे रतः।
प्राचार्यः स च रामदेशिकप्रिये विद्यालये संस्कृते,
विद्यादानविधिं प्रपूर्य तपसा स्वर्गं गतो ज्ञानवान्।।१।।

कल्याणं विहितं च नैकविदुषां सेवा प्रदत्ता मुदा,
हानिः स्वस्य कृता च तत् परहिते धर्मस्य रक्षाकृता।
पूतं तत्कृतमद्धितं तु महितं स्वप्नेऽपि सन्धार्यते,
सीतारामसनत्कुमारगुरवे श्रद्धाञ्जलिर्दीयते।।२।।

पुष्पा नाम सनत्कुमारसुगुणा भार्याऽर्चना संयुता,
भ्राता तस्य रमानिवाससहितः श्रीणां निवासः कुले।
शैलेशस्य कृपायुतश्च विमलः शैलेशनामात्मजो,
धन्यो ज्ञानिसनत्कुमारसुधियः वंशस्त्रिपाठी सदा।।३।।

सीमाऽथर्वसुपुत्ररत्नससुखा भद्रा कनिष्ठा वधू
जाता ज्येष्ठवधूश्च यस्य विमला पुत्रं सुबन्धुं नतम्।
चोत्पाद्याऽद्य प्रबन्धुसन्ततितर्तिं भाग्येन संशोभितो,
हीदृक्षस्तु सनत्कुमारविबुधः शान्तिं च सौख्यंगतः।।४।।

अर्चनाऽशोकशुक्लेन पुत्री युता,
वन्दनायाश्च शैलेन्द्रनामा पतिः।
साधना या तु भूपेन्द्रशुक्लाऽन्विता,
ताश्च तिस्रस्तु पुत्र्यो गुणैः संगताः।।५।।

राजेशस्य शुभा प्रिया च रचना नाम्नी तु भार्या कुले
लक्ष्मीशक्तिविभाविता च सुसुता प्राचार्यवर्यस्य सा।
पुत्री पंचमसंख्यिका च कमला साक्षात् शुचिर्भावना,
शुक्लं स्वामियुतं पतिं च शरणं प्राप्ताऽन्वये मोदते।।६।।

एतैः सर्वकुटुम्बिभिः सहृदयैः सम्भ्राजितो पूजितः,
स्वर्गीयः स सनत्कुमारमुनिना ह्यासंगतः सद्गतिम्।
प्राप्तो नाकगतो हि सर्वविदितः शाण्डिल्यमार्गो महा-
नाशीर्वादयुतेन लालमणिना संधार्यते श्रद्धया।।७।।

❑❑

# प्रशस्तिपत्रम्

परमसम्मानार्हविद्वत्पुंगवमहामहोपाध्यायविद्यावारिधिसंस्कृत-
समाराधनतत्परसुरवाणीह्लादकारिणां,
पाणिनीयव्याकरणज्यौतिष-
न्यायवेदाविभूषितानामनेकसांस्कृतिककार्यक्रमनिर्मलधियां
वाङ्मयाकाशेसवितृकरनिकरायमाणानां प्रयागस्थ
श्रीरामदेशिकसौदामिनीप्रतिष्ठितपदमलंकृतवतामिदानीं
विश्वनाथनगरीस्थ- बनारसहिन्दुविश्वविद्यालये
उपाचार्यपदप्रकाशवतां दैवीवागनुवर्तितज्ञान-
प्रकाशप्रथितयशसामशेषोत्तरप्रदेशसंलब्धप्रतिष्ठानां
शुक्लकुलकासारकलहंसायमानानां
**श्रीमद्भगवच्छरणशुक्ल**महाशयानामभिनन्दनाय
तत्कण्ठे काव्यप्रसूनमाल्यार्पणं संविभातुतमाम्।

शुक्लः शुक्लकुलावतंसविमलः सूर्यश्च प्राच्यांदिशि,
वेदांगत्वगपाणिनीयप्रभवे शासत्रे प्रसिद्धि गतः।
सारल्येन प्रपूरितो गुरुगुरुः श्रीवैष्णवैः सन्नुतः,
वन्दे तं सुकुलं च रामवदनं पूज्यं गुरुं चेतसा।।१।।

शिष्यस्तस्य च वैदिको गुणगणैः सम्भ्राजितोन्यायगो,
मूलादेवियुतस्य रामकृष्णस्यात्मस्वरूपः सुतः।

वासीमध्यप्रदेशदेशकुठियाग्रामस्य वंशिप्रियः,
काश्यामुच्चपदं तु प्राप्यसुमतिर्विद्वान् प्रसिद्धो जने।।२।।

वाणी यस्य सुधारयाश्रुतियुता शुद्धाक्षरैः प्लाविता,
कार्यं यस्य सुसंस्कृतं च विमलं संचालनं वाङ्मयम्।
शुभ्रं यस्य प्रशासनं विधिकृतं सौदामिनीप्रेरक,
मुत्साहो विपुलस्तु संस्कृतियुतः सम्माननीयश्च सः।।३।।

दैवीवाक्पटुरुद्यमी तु विवुधश्चाध्यावसायी मुदा,
योग्यत्वस्य महत्वदायकमतिर्विद्वत्प्रियः शास्त्रपो।
दैवज्ञः स च गीतिशास्त्रनिपुणः सौदामनी खे यथा,
व्युत्पन्नोननु पाणिनीयविधिधीर्ज्ञानी सभापण्डितः।।४।।

भगवतः कृपया कटनीप्रियश्,
च वरही शुभधामसुसंयुतो।
मुहगवाँऽभिहितो निजतेजसा,
तु भगवच्छरणो हि विराजते।।५।।

गंगातटेऽस्मिन् प्रथिते प्रयागे,
विद्यालये संस्कृतसेवनेन।
सम्वर्द्धनेनाद्यविभुर्हि जातः,
शुक्लप्रियः पण्डिभाग्यभाक् च।।६।।

प्रदेशोऽशेषे यः प्रथितविदुषां नन्दनकरो,
गरिम्णा शुक्लानां गुणगणगरिष्ठश्च कलितः।
प्रतिष्ठावान् विद्वान् सहृदयधुरीणो बुधप्रियो
जनानां चित्ते त्वं निशि च दिवसे स्थानमगमः।।७।।

यथा सूर्यो देशे विदितनिजधाम्नाव्यधिकृतः,
यथा चन्द्रो रात्रौ तरल किरणाह्लादजनकः।
यथा देवाचार्यो निखिलसुरसम्मानमगमत्,
तथा शुक्लो लोके सदसि सम्मानं च लभताम्।।८।।

❑❑



# प्रयागप्रथितकीर्तिः डॉ. रामजीमिश्रः

ख्यातं ब्रह्मकुलप्रियं च सुलतानाख्यं परं कीर्तितम्,
धामो रामपुर प्रसिद्धलँभुआपत्रालयो वर्तते।
पाण्डेयाऽभिधया युते च सुपुरे लब्धा जनिर्येन हि,
मान्यो मिश्रकुलप्रभू रघुपतिर्युक्तः प्रसादेन च।।१।।

यथा सीता देवी रघुपति प्रियं प्राप्य मुदिता,
तथा सीतामाता रघुपति प्रसादेन सहिता।
जया मिश्रा रामं गुणगणगरिष्ठं ह्यधिगता,
महेन्द्रं पुत्रं स्यान्मणिमिव च सम्प्राप्य मुदिता।।२।।

रामजी मिश्रनाम्ना प्रसिद्धिं गतो यश्च मिश्रे कुले सर्वदा भासते।
यस्य वाणी सदाकाशवाणीगताऽशेषदेशेऽपि कर्णप्रिया राजते।।३।।

यस्य पुत्री प्रिया याऽर्चना भ्राजते शुक्लवंशेन गौरीति शुक्लेन सा।
संयुता यच्छुभानामिकामात्मजामात्मजं मोदते तं च दृष्ट्वा शुभम्।।४।।

तस्य पुत्री द्वितीया च या प्रज्ञयायुक्तप्रज्ञास्वरूपा पृथिव्यां प्रिया।
यस्य पौत्रो हि चादित्यसंज्ञायुतो याऽदितिर्यस्य पौत्री महेन्द्रात्मजा।।५।।

यश्च विद्वत्सभानां प्रणेताविभुर्यो हि विद्वान् सदोत्साहसम्पूरितः।
नैकदेशेषु विद्याप्रचारान्वितः शोभते तीर्थराजे प्रयागेऽधुना।।६।।

यः पुरस्कारतत्याऽग्रगण्यः प्रयागे च सम्मानदानी सदा भ्राजते।
संस्कृतज्ञेन चाऽस्मिन् युगे रक्ष्यते संस्कृतिर्भारतीया हृदा पाल्यते।।७।।

यो हि विद्याप्रचारे रतो दृश्यतेऽहर्निशं ज्ञानविज्ञानधाराऽऽप्लुतः।
ज्ञानगंगा प्रयागे धिया धार्यते, येन वाग्देवता ध्यानगम्या कृता।।८।।

यो हि विद्वत्प्रियो मानवित्ताऽधिकः स्वाभिमानी प्रतिष्ठायुतो वर्तते।
रामजीमिश्रसंज्ञा पताकायते, यस्य कार्यं सदाऽऽदर्शरूपं कलौ।।९।।

यः समासेन सम्वर्ण्यते लेखने, तस्य कृत्यं सदा वन्दनीयं हृदा।
सोऽनुकार्यः सदा धारणीयो मुदा पण्डितैः शास्त्रपारंगतैः साम्प्रतम्।।१०।।

□□

# प्रयागप्रांशुरंशुलो डॉ. शम्भुनाथस्त्रिपाठी

बच्चूलाल इति प्रसिद्धसुधियः शाण्डिल्यगोत्रस्य च,
टेराग्रामनिवासिनो ध्रुवपतिर्देवी तु पत्नी प्रिया।
बाराक्षेत्रयुतस्य यश्चिरहटः खुर्दोऽस्ति पत्रालयः,
क्षेत्रं यत् प्रथितं च शंकरगढं धन्यं प्रयागात्मकम्।।१।।

पुत्राः यज्जगदीशरामसुचिताः भक्तिप्रसादाश्च ये,
शम्भुर्नाथयुतश्च यो हि सुखदः सुग्रीवनामाऽनुजः।
एतैः सभ्यसमाजमानसहितैः पुत्रैः सुसम्मानितः,
क्षेत्रे लब्धप्रतिष्ठधर्मनिरतः शिरसा प्रणम्यो मया।।२।।

भार्या यस्य सरस्वतीगुणयुता ह्यूषात्रिपाठी च या,
तज्जेष्ठश्चर्तेशपुत्रविभवो विज्ञर्षभश्चानुजः।
जाता वेदयुतार्चयेव सगुणा पुत्री 'ऋचानामिका',
चैतत्संततिलब्धजीवनसुखैः सम्वर्धते चांशुलः।।३।।

विश्वस्मिन् प्रथितप्रयागयमुनागंगास्पदे संगमे,
दारागंज इति प्रसिद्धविभवे तीर्थस्थले संस्थितः।

वेणीमाधवमन्दिरस्य सविधे विद्यालयः संस्कृतः,
विख्यातश्च सरस्वतीसुतनिभः साक्षात्त्रिवेणीभुवि।।४।।
तस्मिन् संस्कृतिसंस्कृते तु प्रथिते विद्यालये भ्राजते,
शास्त्रज्ञः स च शम्भुनाथकृपया शम्भुः शिवश्चांशुलः।
प्राचार्येतिपदेन लब्धयशसा विद्याप्रचारे रतः,
काव्योद्यानविहारनिर्मलधिया कंजः स्वकीये कुले।।५।।

काव्यं नैकविधं च येन रचितं नाट्येन संशोभितम्
नेतृत्वं च सभासु येन विहितं राष्ट्रे समग्रे सदा।
वाणी यस्य सरस्वतीगतियुता भाषात्रयाऽऽप्लाविता,
लोके विस्तृतदिग्दिगन्तप्रगतिः सूर्यप्रकाशोंऽशुलः।।६।।

सारल्येन सुशोभितोऽप्रतिहतः शास्त्रेषु यत् सम्मतिः,
मानी लोकपरोपकारनिरतश्चोत्साहसम्पूरितः।
बुद्धिर्यस्य प्रसूनपुंजरजसा पूर्णेव संदृश्यते,
सम्मान्यो रसभावपूर्णहृदयः शम्भुस्सदा चांशुलः।।७।।

❑❑

# अभिनन्दनम्

**परमश्रद्धेयशान्तिमूर्तिविद्याप्रकाशनाध्यापनकलाकुशलानां**

**समग्रक्षेत्रप्रतिष्ठितानां प्राचार्यवर्याणां**

## "श्री आदित्यप्रसाद ओझा"

**महोदयानां सादरमभिनन्दनम्।**

भग्गूराम इति प्रसिद्धविभवो ढाकापुरे संस्थितः,
वैदुष्येण विभूतिश्च विमलः कीर्त्या युतः सम्पदा।
पुत्रस्तस्य सुयोग्यतां प्रति नुतः पाण्डित्यपूर्णः प्रियः,
आदित्यस्य प्रसादप्राप्तिजनितो भाग्यैश्च संशोभते।।१।।

क्षेत्रेऽध्यापनकार्यलक्षपतिगो सम्भ्राजितो भाग्यवान्,
प्राचार्येषु पुरस्कृतश्च ससुखो ढाकापुरे संस्थितः।
पट्टीक्षेत्रयुते प्रतापगढ़गेग्रामे सदामानितः
विद्यादानविधानप्राप्तिजनकः सम्पूज्यते मद्धृदा।।२।।

रामः कृष्णप्रियस्तु यस्य च सुतो ज्येष्ठोऽस्तिवंशे शुभे,
कर्त्तव्येषु सुनिष्ठितश्च सफलो राज्ञि प्रयागे स्थितः।

पुत्राभ्यां च सुशोभितो हि जनितश्चाशोकरेनूयुतः,
विद्या यस्य प्रिया सुलक्षणयुता सोनूजितेन्द्रा जनिः।।३।।

श्रीकृष्णस्तु सुयोग्यतां प्रतिगतोवाक्कीलकार्यान्वितः,
देवेन्द्रेण नुतश्च यो हि विबुधो योगेशहेमन्तपः।
क्षेत्रे यस्तु प्रतिष्ठितश्च प्रथितो न्यायालये मानितः
विद्यापाठसहायकाय शुभिने मित्रायतस्मै नमः।।४।।

राधेकृष्णसुसंज्ञया च सहितः संगीतया शोभितः
आदित्यस्य कृपामवाप्य सुफलं व्याप्तं च सम्प्रापितः।
श्रेष्ठं प्राप्य पदञ्च लक्ष्मणपुरे साफल्यप्राप्तिं गतः,
पुत्री तस्य शिखा मितेन सुमितेनैवं शुभं प्राप्नुयात्।।५।।

# अभिनन्दनपत्रम्

परमसम्मानार्हकाव्यकलाकलापनकुशलस्यानेकनेतृकुलकासार-कमलस्याऽखिलभारतभूमिमण्डितयशःपताकायमानमूर्तेः, साक्षात्सरस्वतीवरदपुत्रस्योत्तरप्रदेशपूर्वविधानसभाध्यक्षस्य पश्चिमबंगप्रदेशवर्तमानराज्यपालपदमलंकुर्वतस्तीर्थराज-प्रयागप्रतिष्ठासंस्कृतिस्वरूपस्य पं. श्रीकेशरीनाथत्रिपाठिनः सादरमभिनन्दनाय प्रकीर्णशब्दकुसुमांजलिर्विलतुतराम्।।

"यस्त्रिपाठी स्वदेशप्रियं भूषणम्, सादरं सोऽभिनन्द्यः सदा भूतले"

योऽधिवक्ता च विज्ञानधारायुतो ज्ञानिनामग्रगण्यः शुभो धार्मिकः।
श्रीपतिर्यः सुधायाः पतिर्मानितः, सोऽभिनन्द्यः कथं नैव मे भारते।।१।।

सप्तवारं क्रमेणैव निर्वाचने, यः प्रदेशे जयं प्राप्तवान् दिग्जयः।
संविधानस्य वेत्ता विधिज्ञो विभुः स ध्रुवं वन्दनीयः प्रयागे सदा।।२।।

राज्यपालो न मात्रं पदेनैव योऽनेकराज्येषु पालो मया दृश्यते।
केशरीनाथनामा च यः केसरी, केसरो यः प्रसूनप्रपुंजस्य भोः।।३।।

धर्मशास्त्रामृतं पीयते येन तत्, तस्य कीर्तिः पृथिव्यां पताकायते।
राजनीतिश्च धर्मस्य नीत्या युता, धार्यते जीवने येन साफल्यगः।।४।।

उत्तरे यः प्रदेशे विधाने सभाध्यक्षकार्यं प्रपूर्याऽद्य देशान्तरम्।
पालयित्वा पृथिव्याः सुपुत्रो युगेऽस्मिन् जनन्यात्मशान्तिः कृताऽनेन वै।।५।।

येन माता पिता देववत् सेवितौ, शान्तिमूर्तिः सुधावाक्प्रियः संस्कृतः।
सोऽनुकार्यः सदा पूजनीयो मुदा, एष वन्द्योऽभिनन्द्यो जनैः भारते।।६।।

वायोवेद इतिप्रसिद्धविमले संस्थानदेशे शुभे,
क्षेत्रं यत्र प्रयागमंचविदितं देशे प्रसिद्धिं गतम्।
सौभाग्येन महीयतेऽभिनन्दनमिदं शब्दप्रसूनात्मकम्,
धन्येनैव विनीतलालमणिना, भूयात् यशोवर्धनः।।७।।

□□



## पश्चिमबङ्गप्रदेशराज्यपालस्य
## श्री केशरीनाथत्रिपाठिनः
# स्वागतम्

महासम्माननीयस्य शुभं ते स्वागतं ब्रूमः

धनैर्धान्यैर्विहीनोऽहं विवेकैर्नापि युक्तोऽहम्।
वचः पुष्पैर्मुदा भूयश्च हार्दं स्वागतं ब्रूमः।।
महा...।।१।।

त्रिवेणीपुष्पमालाभिश्च संगमसंगमेनित्यम्,
विकासैः शोभितस्यैवं शुभं ते स्वागतं ब्रूमः।।
महा...।।२।।

सदा पूजाविधानेत्वं तु देवानां प्रियो भक्तः,
कृपा त्वयितीर्थराजस्य भवेदिह कांक्षितं ब्रूमः।।
महा...।।३।।

त्रिपाठिन् केसरीत्वं नेतृवर्गे मानितोमनसा,
सदा सोमेश्वरे श्रद्धालवे तुभ्यं नमो नित्यम्।।
महा...।।४।।

कमलचिह्नं प्रियं दिव्यं त्वदीये दक्षिणे हस्ते,
जयो जातस्सदा निर्वाचने संरक्षिते देशे।।
महा...।।५।।

□□

**श्रीसम्पूर्णानन्दसंस्कृतविश्वविद्यालये उत्तरप्रदेशस्य महामहिम राज्यपालानां श्री रामनायिकमहाशयानामभिनन्दनम्**

**दीक्षान्तसमारोहे मङ्गलाचरणम्**

**सारस्वते स्त्रोतसि सन्निमग्ना, सम्भ्राजितासंस्कृतिसंस्कृता च।**
**दीक्षान्तकालेनसुशोभिता या, विद्वत्सभा मंगलमातनोतु।।**

# अभिवन्दनम्

उत्सवे वार्षिके यत्र सम्मेलनम्
संस्कृतेयं च संस्था सदा राजते।
यत्र दीक्षान्तरामाऽभिधो नायको
राज्यपालो गिरीशस्त्रिपाठी च यः।
यत्र विद्वत्सभासंस्कृतिः राजते,
संस्कृतेविश्वविद्यालयो राजते।। उत्सवे...।।१।।

राज्यपालस्तु राज्यस्य सम्पालकः,
पूज्यविद्यायुतो ज्ञान सम्मानगो
विश्वविद्यालये संस्कृते भ्राजते,
देववाणी समाराधको राजते।। उत्सवे...।।२।।

रामचन्द्रो यथा सर्ववन्द्यो नृपो,
नायको धर्मरक्षाव्रती पालकः।

राज्यपालस्तथाऽयं च रामानुगो,
नायको विश्वविद्यालये राजते।। उत्सवे...।।३।।

यो गिरीशस्त्रिपाठी च मुख्यातिथि-
र्योग्यतापक्षपाती सुधीः पूज्यते।
यश्च काशीमहेशस्वरूपः सदा,
विश्वविद्यालये संस्कृते राजते।। उत्सवे...।।४।।

येन दीक्षान्तकार्यञ्च सम्पाद्यते,
कर्मयोगी द्विवेदी सदा संस्कृतो
विश्वविद्यालयोऽयं च सम्भ्राजते,
शान्तिमूर्तिर्यदोर्नाथगो राजते।। उत्सवे...।।५।।

देववाणी समाराधने तत्पराः,
संस्कृतस्य प्रचारे सदोपायगाः।
संस्कृतं रक्षणीयं भवद्भिस्सदा
विश्वविद्यालयेऽप्रार्थना भ्राजते।। उत्सवे...।।६।।

अत्र सम्मेलने देववाणीयुता,
काव्यधारा सुधा कामिनी राजते
वा यथा खे प्रिया दामिनी राजते
नायको रामनामाभिधो राजते।। उत्सवे...।।७।।

□□

# अभिनन्दनपत्रम्

**परमसम्माननीयानामुत्तरप्रदेशपूर्वमुख्यमन्त्रिणां श्रीमतामुदाचरितशिक्षाविज्ञानविकसितचेतसां समग्रे उत्तरप्रदेशे शिक्षकवृन्दपक्षपातिनां राजनीतिपटूनां माननीयहेमवतीनन्दनबहुगुणामहाशयानां प्रयागे कृतं सादरमभिनन्दनम् विलसतुतराम्।**

ध्यानी देशसुसिद्धिप्राप्तविभवः सौहार्दकामो विभुः,
सर्वज्ञो हि शुभप्रभुर्बहुगुणानामाऽस्तिदेशप्रियः।
पुत्रो रेवतिनन्दनस्य सुखदः सत्कार्यवादीसदा,
स्वीकुर्मो हि कृतज्ञतां सुविमलां विद्यालयस्था वयम्।।१।।

कार्यं यस्य परोपकारकरणं सेवा प्रजानां मुदा,
भूतं जन्म हि यस्य ब्राह्मणकुले सम्मानिते पूजिते।
श्लाघात्वं हि यदीयपुण्यशुभदं प्राकट्यमानप्रदम्,
स्वीकुर्मो हि कृतज्ञतां सुविमलां विद्यालयस्था वयम्।।२।।

कारागारनिवासदेशविमले कार्ये सुसाफल्यगो,
वैदुष्येण सुपूरितो हि कमलाकान्तप्रियो निर्मलः।
श्रेष्ठानां शुभकर्मकारिविनयस्त्यागी सुकीर्तिप्रियः,
स्वीकुर्मो हि कृतज्ञतां सुविमलां विद्यालयस्था वयम्।।३।।

सारल्येन सुपूर्णकामनिचयो विद्वत्सुपूज्यो धिया,
आयातस्तु हितप्रवृत्तिचयनो धन्यान् विधातुं च नः।
नेतॄणां प्रविचारसारनिलयारामे विहारिंस्तव,
स्वीकुर्मो हि कृतज्ञतां सुविमलां विद्यालयस्था वयम्।।४।।

प्राप्तः श्रेष्ठपदञ्चमानधवलं मुख्यातिथित्वं च सः,
सौदार्हं विदधाति कान्तवपुषा वाचा धिया यः सुधीः।
वाणीकेवलमात्मभावनिचया तस्य प्रकाशीकृता,
स्वीकुर्मो हि कृतज्ञतां सुविमलां विद्यालयस्था वयम्।।५।।



# अभिनन्दनपत्रम्

**अस्माकं प्रदेशस्य अलंकारस्वरूपाणां दयास्वभावसफलकुशलनेतृत्वशोभितानां संस्कृत-संस्कृतिपरिपूर्णपूर्वमुख्यमन्त्रिणांतदनुरूपनूतनमुख्यमन्त्रिणां नवोदीयमानसूर्यरूपाणामगणितगुणगणसम्राजितानां महनीयस्वभावपरिपूर्णानां श्री अखिलेशयादव महाभागानामद्वितीयव्यक्तित्वपरिपूर्णानां कृते सादरमभिनन्दनं शुभाशंसनञ्च।**

समाजपार्टीप्रमुखो विधाता मुलायमो नाम नृपाऽधिराजः।
अनेकवारं निखिले प्रदेशे, स च मुख्यमन्त्रीपद्भाग् विभुश्च।।१।।

तस्यात्मजो नूतनमुख्यमन्त्री, सारल्यपूर्णो गुणवांश्च विद्वान्।
परोपकारेण सुशोभितश्च, नेता युवा श्रेष्ठपदञ्च प्राप्तः।।२।।

स च सूक्ष्मदर्शी समदर्शितां च, प्राप्तः स नेतृप्रमुखः स्वदेशे।
दयास्वभावः स हि देवमूर्तिः संस्कारपूर्णो हि जनैः सुवन्द्यः।।३।।

सम्प्राथ्यते संस्कृतपाठशालाप्राध्यापकैर्वेतनप्राप्तिकामैः।
लिपिकैर्विहीनैश्च चतुर्थश्रेणीकचरैर्विहीनैश्च विपत्तिप्राप्तैः।।४।।

अनेकवर्षैर्निःशुल्कसेवां कृत्वा विना द्रव्यमिति प्रपन्नाः।
आशान्विता अद्य त्वदीयपार्श्वे, समागता दीनमुखा दयालो।।५।।

राजा प्रजानां सम्पालकश्च, स्वं जीवनं कीर्तिमयं करोति।
दानी च धर्मी च विपत्तिनाशी, साफल्यपूर्णोखिलमानवानाम्।।६।।

त्वं चाखिलेशो भगवांश्च साक्षात् संरक्षणं संस्कृतपाठशाला–
प्राध्यापकानां च चतुर्थश्रेणीकविपत्तिगानां लिपिकर्मणां च।।७।।

रामश्च कृष्णश्च शिवश्च विष्णुर्वाग्देवतायुक्तसमग्रदेव्यः।
रक्षन्त्वजस्त्रं साफल्यपूर्णं कुर्युश्च नेतारमिमं समृद्धम्।।८।।

❑❑



# अभिनन्दनपत्रम्

परमसम्मान्याऽधिकारिमुकुटमणिलब्धप्रतिष्ठोत्कृष्टसेवाप्रशासन-
कुशलानां सहृदयोच्चकोटिप्रगल्भज्ञानशक्तिसमलंकृतानां
ध्यानगम्यदेवाऽराधनसंव्यापृतानामात्मज्ञानसुभोभितवपुषां
समग्रप्रदेशे यशःपताकासम्भ्राजितानां, इलाहाबादमण्डलस्य
संयुक्तशिक्षानिदेशकानां श्रीमहेन्द्रसिंहयादवमहाभागानां
सादरमभिनन्दनाय प्रस्तुतोऽयं
काव्यकुसुमाञ्जलिर्विलसतुतराम्।।

ख्यातं शाहजहाँपुरं तु विमलं नूरं पुरं यत्र हि,
वासः भाग्ययुतः सदा च कजरीग्रामो ह्यरेलीप्रियः।
स्वीये सभ्यकुले प्रसिद्धविभवे राजेन्द्रपालाऽभिधः,
पत्नीं प्राप्य सुमोदते च बिटरानीतिप्रियाम् शारदाम्।।१।।

पुत्रस्तस्य सुलक्षणो हि विमलः साक्षान्महेन्द्रः सुधीः,
सम्मान्यश्च विभूषितो हि सुगुणैर्देव्याः कुमारप्रियः।
कर्तव्येषु च निष्ठितश्च कुशलः कृष्णप्रियो यादवः,
रश्मिश्चन्द्रिकया युता तु वनिता सौभाग्यदा तस्य च।।२।।

पुत्रो यस्य यथा सुमन्त्रप्रणवः ओंकारसादृश्यगः,
कृष्णः कृष्ण इव प्रियश्च सुसुता कृष्णा शुभाऽवन्तिका।

द्वाभ्यामेव प्रियः शुभं प्रलभतां शिक्षाविभागे मुदा,
दुर्गायाः कृपया विनम्रविनयः उच्चाऽधिकारी प्रभुः।।३।।

प्रशासनं यज्ञसमं विधाय, ज्ञानप्रचाराय सदा सुयत्नः।
चोत्कृष्टविद्यासुपुरस्कृतश्च, महेन्द्रसिंहो नृपतिः कुलस्य।।४।।

स्वदेशेऽशेषे यः सकलविदुषां नन्दनकरः,
महेन्द्रः सिंहो हि गुणगणगरिष्ठश्च विवुधः।
प्रकृष्टो वक्ता यः शुभगजनसम्मानितगुरुः,
प्रचारं विद्यायाःजगति कृतवान् मंगलमयम्।।५।।

सरससौम्यसुधामयवाक्प्रियः, स तु समो विदुषां हितचिन्तकः।
बुधपतिः सुकृतिः सुमतिः सुधीर्विजयते भुवि रश्मिपतिः सदा।।६।।

अनन्तः ख्यात्या यः परमसरलो वेदविधिगः,
सुपूज्यो विद्यायाः सुत इव तु साक्षात् प्रभुरिव।
महानन्दः स्वामी सकलहृदयाऽऽनन्दजनकः,
कृपां कुर्याच्छिष्ये चरणरजसा पूतहृदये।।७।।

❑❑

# कविपरिचयः

पाण्डेयवंशी मणिलालनामा विद्यालयप्राप्तवरिष्ठ सेवः।
साहित्यसंगीतकलाप्रियो हि निर्माति गीतानि प्रियाणि लोके।।१।।

पट्टीक्षेत्रयुतः प्रतापगढतः क्रोशेऽष्टमे संस्थितः,
पूर्वस्यां दिशि सूर्यभानुसदृशः ख्यातः कुलीने कुले।
ग्रामोऽशोकपुरः प्रसिद्धविदुषां सम्मर्दयुक्तश्शुभः,
पाण्डेयप्रतिपालकप्रतिनिधिः कुर्यात्सदा मङ्गलम्।।२।।

माता रामकली सुपूज्यचरणा, रामाभिलाषाश्च मे,
शास्त्रज्ञानयुतास्सुपूज्यजनकास्सम्माननीया बुधैः।
पूज्याः मानिकचन्द्रमिश्रगुरवः प्राचार्यपादाश्च मे,
प्रातः कालकृतप्रणामशुभदा दीव्यन्तु चित्ते सदा।।३।।

निर्वाणवेदे विद्यालये ये प्राचार्य पीठस्थितपूज्यपादाः।
प्रसिद्धविद्वत्सुपुरस्कृताश्च, श्रिया प्रदीप्ता गुरवो मदीयाः।।४।।

□□

# शुभाशंसनम्

●

लालमणिपाण्डेयाभिधस्य विदुषो विद्वत्परिचयात्मकः काव्यग्रन्थो मयाऽवलोकितः। तन्मे मनोऽतिमात्रं रारङ्क्ति। यथा सरस्वत्याः वीणापाण्याः वर्णनं पुण्याय सम्पद्यते, तथैव सारस्वताभिधानमपि। आशासे एतेषां पाण्डेय-महाभागानामुत्तरोत्तरं समेधमाना कवित्वशक्तिः विद्वन्मणिमालामध्यमणिरूपेण संस्थाप्य समेषां चमत्कृतिं सम्पादयिष्यतीति।

**प. रामकृष्ण त्रिपाठी**

(पू.प्राचार्यः, श्रीहरीरामगोपालकृष्णसं.म.वि., प्रयागः)

●

कविता सरस्वत्या उत्तमः प्रसादो यस्मिन्नतीव कृपा भवति स एव कवितां विदधाति। शुभगशब्दप्रयोगचतुरो भावविधानचित्रकार एव कवितां कर्तुं प्रभवति। आचार्यलालमणिपाण्डेयमहाभागः साहित्यशास्त्रे संस्कृतसाहित्ये च कृतभूरिश्रमः "संस्कृतगीतकन्दलिका" इति काव्यसंग्रहं प्रकाश्य संस्कृतजगतो महदुपकारं विहितवान्। काव्यसंग्रहोऽयं सरसः सहृदयहृदयावर्जको विद्यते। एवमधीत्य कवयो मुदिताः आह्लादितहृदया भविष्यन्तीत्याशासे।

**प्रो. भगवत्शरणशुक्लः**

व्याकरणविभागः

काशीहिन्दूविश्वविद्यालयः

वाराणसी

●

मातुः सरस्वत्याः गीर्वाणवाणिभुवनाभरणं भवत्याः विद्यायाः साफल्यं कविता विकासे "संस्कृतगीतकन्दलिका" नाम्नो ग्रन्थप्रकाशने महतः प्रमोदोऽस्माकं संस्कृतसमाजो बहुप्रमुदित उपकृतश्च भविष्यतीति – आचार्य पं. श्रीलालमणिपाण्डेय

महाभागो ग्रन्थकर्ता भृशं प्रशंसनीयः। आशासेऽहं भवत्कवितासंस्कृतगीत-कन्दलिकाभिः सर्वे सहृदयाः सरसानन्दानुभूतिं लभेयुः।

डॉ. उमाशंकरः त्रिपाठी
प्राचार्यः
वीरभूमि राजकीय स्नातकोत्तरमहाविद्यालयः, महोबा (उ.प्र.)

●

आचार्य लालमणिपाण्डेयद्वारा प्रणीत संस्कृतगीतकन्दलिका का प्रकाशन अत्यन्त सराहनीय है और मेरी शुभकामना है कि विद्वज्जन इस महत्वपूर्ण कृति से लाभान्वित हों।

(आर. पी. त्रिपाठी)
प्रोफेसर एवं पूर्व विभागाध्यक्ष
प्राचीन इतिहास संस्कृति एवं पुरातत्त्व विभाग
इलाहाबाद विश्वविद्यालय, इलाहाबाद

●

आचार्यप्रवर श्रीयुत लालमणि पाण्डेय द्वारा रचित कृति संस्कृतगीतकन्दलिका में कवि की प्रतिभा का सफल निदर्शन है। इस रचना के पठन-श्रवण से मन आह्लादित होता है। आचार्य पाण्डेय इसके लिए बधाई के पात्र हैं।

(डॉ. कमलेश त्रिपाठी)
एसो. प्रो. एवं अध्यक्ष, संस्कृत विभाग
नागरिक स्नातकोत्तर महाविद्यालय, जँघई, जौनपुर (उ.प्र.)

●

आचार्य लालमणि पाण्डेय द्वारा प्रणीत संस्कृतगीतकन्दलिका के सफल प्रकाशन एवं लोकप्रियता की हम सहर्ष कामना करते हैं।

(आर. के. शुक्ल)
निरीक्षक संस्कृत पाठशालाएँ, उ.प्र.

संस्कृतगीतकन्दलिका के प्रकाशन पर शुभकामनाएँ रा.पू. पाठक

**रा.पू. पाठक**

सेवानिवृत्त प्रधानाचार्य

डॉ. के.एन. काटजू इण्टर कॉलेज, इलाहाबाद

●

संस्कृतगीतकन्दलिका की कविताएँ भारतीय संस्कृति की पोषक और अद्यतनीन समाज के लिए प्रेरक हैं।

**डॉ. शम्भुनाथ त्रिपाठी 'अंशुल'**

प्राचार्य

श्री त्रिवेणी संस्कृत महाविद्यालय, दारागंज, इलाहाबाद

●

आचार्यलालमणि पाण्डेय की साहित्याराधना प्रस्तुत ग्रन्थ में परिलक्षित होती है अतएव वर्धापन।

डा० चिरञ्जीवि शर्मा

**डॉ. चिरञ्जीवि शर्मा**

प्राचार्य, वेदभवन संस्कृत महाविद्यालय

अलोपीबाग, इलाहाबाद

●

संस्कृतगीतकन्दलिका की सुललित कविताएँ मनोरञ्जक एवं शिक्षाप्रद हैं।

राधेरमण पाण्डेय

**राधेरमण पाण्डेय**

महामंत्री

प्रादेशिक संस्कृत विद्यालयाध्यापक समिति

इलाहाबाद

श्री पाण्डेय जी का कार्य अत्यन्त सराहनीय है, ग्रन्थ सफल हो..

**श्यामनारायण पाठक**

प्राचार्य, रणजीत पण्डित इं.का.,

नैनी, इलाहाबाद

●

पाण्डेय जी की कविताएँ समसामयिक, नैतिक, विज्ञान, हरितक्रान्ति, पर्यावरण आदि की सम्पोषक हैं।

नन्द कुमार मिश्र

**नन्दकुमार मिश्र**

प्राचार्य, श्री सौदामिनी संस्कृतमहाविद्यालय, इलाहाबाद

●

